७.

१. षष्ठमहर्व्याख्यातव्यं । तच्च तावत्सामान्यमेतत् स्वरूपं । स्तोमसङ्ख्या होत्रकाणां स्तोमातिशंसनार्था । रैवतपृष्ठमिति स्वमतप्रकाशने । षष्ठमिति संव्यवहारार्थम् ।

२. नित्याभिः प्राकृतीभिर्याज्याभिः पारुच्छेपीर्वक्ष्यमाणिकाः संधाय यजन्ति । होत्रादयः । नित्याः पूर्वा याज्याः कृत्वा पारुच्छेपीभिर्यजन्तीति श्रुतेः । पारुच्छेपीभिरिति समानेषु प्रतीकेषु नियमार्थम् ।

३. आ त्वा जुवो रारहाणा अभि प्रयः आ वां धियो ववृत्युरध्वराँ उपेत्यैन्द्रवायवस्य पुरोनुवाक्ये भवतः । सुत्यन्तरात् नित्याभ्यां सह संधाय । नेदच्युतं यज्ञस्य प्रियं देवानामन्तरयामेति प्रार्थमादस्य तुल्यत्वात् ।

४. स्तीर्णं बर्हिरुप नो याहि वीतये आ वां रथो नियुत्वान्वक्षदवस इति याज्ये नित्ययोरुत्तरे । तयदाभिस्तदर्धर्चे वषट्कुर्वन्तीति (१६. ४) श्रुतेः ।

५. सुषुमा यातमद्रिभिरिति नित्याया उपरि मैत्रावरुणग्रहस्य पुरोनुवाक्या कार्या । उत्तरा याज्या । इम आ यातमिन्द्रव इत्येषा नित्याया उपरि उत्तरा याज्या ।

६. युवां स्तोमेभिर्देवयन्तो अश्विनेत्येषा आश्विनस्य ग्रहस्य पुरोनुवाक्या नित्याया उपरि । उत्तरा याज्या अचेति दस्रेत्येवमादिका ।

७. वृषन्निन्द्र वृषपाणास इन्दव इति पोतुः प्राकृताया उपरि ।

तां वां धेनुं न वासरीमिति मैत्रावरुणस्य नित्यानन्तरा। विश्वेषु हि त्वा सवनेषु तुञ्जत इति ब्राह्मणाच्छंसिनो नित्यामुक्त्वा। सो षु वो अस्मदभितानि पौंस्येति पोतुर्नित्या च पूर्वा। आ यज्ञः पत्नीर्गमन्यच्छेति नित्याया उपरि द्विपदा। ततस्त्वा नो रायस्त्रातिपाचो वसूनीति नेष्टुः। यथासङ्ख्याभावान्नेष्टुर्वचनं। द्विपदा त्रिष्टुप् चेति च[1] समुच्चयार्थः। अग्निं होतारं मन्ये दास्वन्तमित्याग्नीध्रस्य नित्या च पूर्वा। दध्यङ् ह मे जनुषं पूर्वो अङ्गिरा इत्यच्छावाकस्य नित्याया उपरि। प्रातःसवने प्रस्थितानामेता याज्याः।

८. तुभ्यं हिन्वानो वसिष्ठ गा अप इति पक्षयोः सूक्तयोरेकैका होत्रादीनामनुप्रैषमूर्ध्वं याज्या भवति। नित्यान्पूर्वानुयाजान् कृत्वा नाराशंसदेवं जपतीति (२ २. ४) श्रुतेः।

९. होतरेतद्यजेत्यध्वर्युराह गृहपतिश्चेत्यस्यापवादः। यजिषवैश्ययोरपि स्वयंक्रिया स्वयमिति वचनात्।

१०. साग्निचित्ये[2] कर्मणि चित्यस्याग्नेः पश्चादुपविश्याध्वर्युर्यजति। अनग्निके उत्तरवेदेः[3] प्राक्तामुखीयस्याग्नेः पश्चादुपविश्य गृहपतिर्यजति।

११. पिबा सोममिन्द्र सुवानमद्रिभिः इन्द्राय हि द्यौरसुरो अनम्नत। त्वया वयं मघवन्पूर्व्ये धने। पाहि न इन्द्र सुष्टुत स्रिधः। नू इत्था ते पूर्वथा च प्रवाच्यं। अवर्मह इन्द्र दादृहि श्रुधी नः। वनोति हि सुन्वन् क्षयं परीणसः। इत्येता माध्यन्दिने सवने होत्रादीनां प्रस्थितयाज्याः। यागो यथासङ्ख्येन नित्यानामुपरि।

[1] D om. च, C has it in marg. [2] C D साग्निके। [3] A ins. पशात्।

१२. न पात्न्वेपीसंधानं। क्रियांस्तु विकारः। उत माता इहद्दिवा शृणोतु न इति नित्या अमेव न इति निवर्त्यं[1] प्रस्थित-याज्या भवति।

१३. अनवानन्तो ऽर्धर्चेष्वनवानन्तः। त्रिष्वपि सवनेषु प्रस्थितानां द्विदेवत्यर्तुयाजानां च[2] यजन्ति।

१४. तद्दे खल्वैकाह्निकीभिरेव यजेयुरिति (२२.५) श्रुतेः। अस्मिन्नपि पक्षे ऽनवानन्त एव।

---

८.

१. अयं जायत मनुषो धरीमणीत्याज्यमिति श्रुतेः। पद-विपर्ययमेकस्मिन्पादे।

२. वक्ष्यमाणकः। सूत्रान्तरे विशेषवचनात्।

३. कीर्ष्वं बर्हिरुप नो याहि वीतय इति वायव्यस्तृचः।

४. आ वां रथो नियुत्वान्वक्षदवस इत्यैन्द्रवायवस्तृचः।

५. अयं मित्राय वरुणाय शंतम इति मैत्रावरुणस्तृचः।

६. युवां स्तोमेभिर्देवयन्तो अश्विनेत्याश्विनस्तृचः।

७. तृषमिन्द्र वृषपाणास इन्दव इत्येका ऐन्द्रस्य तृचस्य।

८. अवर्मह इन्द्र दादृहि श्रुधी न इत्येते द्वे पूर्वया सहैन्द्र-स्तृचः।

९. ओ षू णो अग्ने शृणुहि त्वमीलित इति वैश्वदेवस्तृचः।

---

१ A निरैव्य C नित्यो निवंत्ये प्र॰ D नित्यां निवर्त्ये प्र॰। २ C D तु instead of च।

१०. इयमददाद्रभसमृणच्युतमिति सारस्वतस्तृचः। इति प्रउगतृचानि। पुरोरुचस्तु नित्याः।

११. उत नः प्रिया प्रियास्विति समूल्हपक्षे सारस्वतस्तृचो भवति।

१२. स पूर्व्यो महानामिति मरुत्वतीयस्य प्रतिपदिति श्रुतेः।

१३. यं त्वं रथमिन्द्र मेधसातये। स यो वृषा वृष्ण्येभिः समोकाः। मरुत्वाँ इन्द्र मीढ्व इति निष्क इति एतन्मरुत्वतीयं। सूक्तविहृद्भावन्ये निविद्धयमे त्वाहाव इति यथोक्तम्।

१४. रेवतीर्नः सधमादे रेवाँ इद्रेवतः स्तोतेति रैवतस्यान्यापि सत एतौ स्तोत्रियानुरूपौ भवतः।

१५. मा चिदन्यद्वि शंसतेति साम: प्रगाथ इति श्रुतेः।

१६. एन्द्र याह्युप नः परावतः। प्र घा न्वस्य महतो महानि। उप नो हरिभिः सुतमित्येतास्तिस्र इति निष्केवल्यं। सूक्तविहृद्भावन्ये निविद्धयमे त्वाहाव इति यथोक्तम्।

१७. अभि त्यं देवं सवितारमोण्योः। कविक्रतुमित्यतिच्छन्दसा वैश्वदेवं प्रतिपद्यत इति (११. ८) श्रुतेः।

१८. तस्या इत्यन्यथापि शंसने सति प्रतिपत्त्वे वर्तमानाया एष एव धर्मः। षोडशाक्षरेण प्रतिपत्पदविग्रहणं। ततोऽष्टाक्षरेण प्रणवः। पुनः पञ्चदशाक्षरेणावसानं। पञ्चदशाक्षरेण प्रणवः।

१९. अस्य हि स्वयशस्तरमित्येवमादिके प्रतिपद् उत्तरे भवतः।

२०. अभिवानन्नुचर इति श्रुतेः।

२१. उदु ष्य देवः सविता सवायेति सावित्रमिति श्रुतेः।

२२. कतरा पूर्वा कतरापरायोरिति द्यावापृथिवीयमिति (२३. ८) श्रुतेः।

२३. किमु श्रेष्ठः किं यविष्ठो न आजगन्नित्यार्भवमिति श्रुतेः।

२४. इदमित्था रौद्रं गूर्तवचा इति वैश्वदेवं। तस्य द्वे उत्तमे परिशिष्य ये यज्ञेन दक्षिणया समक्ता इत्येतं नाराशंसं समावपतीति श्रुतेः। परिशिष्टे इदमित्थेत्यस्य सूक्तस्य ये सूक्ते तस्मिन्कर्मे शंसतीति वैश्वदेवे विकारो ऽन्यत्राहतम्।

२५. अहश्च कृष्णमहरर्जुनं चेति वैश्वानरीयमिति श्रुतेः।

२६. प्रयज्यवो मरुतो भ्राजदृष्टय इति मारुतमिति श्रुतेः।

२७. इमं स्तोममर्हते जातवेदस इति जातवेदसीयमिति श्रुतेः। इत्याग्निमारुते। विकार इति वाक्यशेषः। विकारवचनादन्यत्राहतम्।

२८. मध्यमस्त्र्यहश्चतुर्थपञ्चमषष्ठान्यहानि। तत्र ये उक्ता निष्केवल्यमरुत्वतीययोरुत्तमान्कृत्वास्तानुत्सृजति समूल्हपक्षे। व्यूल्हपक्ष एव गायत्रमाध्यन्दिनं युज्यते। अन्यत्प्रकृतिवत् त्रैष्टुभं माध्यन्दिनसवनमिति।

२९. व्यूल्हपक्षे[1] यान्युक्तानि वैश्वदेवानि मध्यमे त्र्यहे तानि शस्त्वा तदन्ते समूल्हपक्षे[2] स्वस्ति नो मिमीतामिति च तिस्रः। चकारः समुच्चयार्थः। एतास्तिस्रः प्राक् पञ्चजनीयायास्त्रिष्वप्यहस्सु साकल्येन व्यवस्थिताः करोति। यथायज्ञं।

---

[1] C in marg सम्।    [2] C D om समूल्हपक्षे।

२०. समूल्ह एव क्रियमाणे ऽयमपरो विशेषः। ततं मे अप-स्तद् तायते पुनरित्येतच्चतुर्थस्याह्न आर्भवं भवति। प्र ऋभुभ्य इत्ये-तन्निवर्तते।

२१. चतुर्थ एवाहनि चाग्रन्दात्। चतुर्थे ऽहनि यच्चाहतमुक्तं क ईं व्यक्ता इति तस्यान्ते समाम्नावित्यर्थः। प्र यन्तु वाजास्तविषीभि-रग्नय इति तिस्रः करोति शंसतीत्यर्थः। प्र यन्तु वाजास्तविषीभि-रग्नय इति तिस्रो ऽधिकाः समूल्हा इति[1] (१२. ८) श्रुतेः।

२२. चतुर्थस्य समूल्ह इति वर्तते। वसुं न चित्रमहसं गृणीष इत्येतच्चतुर्थे ऽहनि समूल्हे जातवेदसीयं भवति। ऊर्ध्वे वः सुद्यो-त्मानमिति निवर्तते।

२३. वैयूल्हिकारयलहाससमूल्हिके यो विशेषः स उक्तः। परोक्षपृष्ठादिषु तु छन्दोगवशेन स्तोत्रियानुरूपास्सामप्रगाथांश्च कुर्यात्। तत्र हि सामपरोक्षे एतेष्वेव स्तोत्रियेषु अन्यानि सामानि अमात् सामपरोक्षे ऽनुरूपेष्वन्यानि तथानुरूपे अपि वैराजे क्रिय-माणे न्यूङ्खे भवत्येव। वैराजस्येति सामाश्रयत्वात्। यदि पुनर्वै-राजस्य सामान्तरं भवति ततो न न्यूङ्खः। न हि वैराजं ततयाम-मन्यूङ्खमायेति श्रुतेः। शाक्करं तु नान्यासृक्षु न शक्करीष्वन्यत्सामेति समाख्यानात्। बृहद्रथन्तरमितरे। अथ कस्मादन्यर्चं बृहत्क्रियत इति श्रुतेः। दशमे वाहनि स्वयोनौ रथन्तरं। उपाक्ष्यपृष्ठ आपकर्ष-पृष्ठे तमूपृष्ठे ब्रह्मसामानि छन्दोरष्टस्तोमे व्यूल्हाः स्तोमा इति छन्दोगवार्त्ता।

[1] A समूल्ह इति।

२४. उक्तानां षलहानां ये विशेषा उक्तास्तद्व्यतिरिक्तमन्यत्तुल्यं समूल्हेन। ततश्च समूल्ह एषां प्रकृतिः[1]। उक्थ्यषोडशिनोस्तु न्यूङ्खो भवत्येव होतुः। यस्माच्छन्दोगवशेन स्तोत्रियानुरूपान्सामप्रगाथांश्चेति वचनं। श्रुत्यर्थवादस्यानुग्रहीतो भवति। अथ कस्माच्चतुर्थेऽहनि न्यूङ्खयतीत्येवमादिकः।

२५. विश्वजिदपि परोक्षपृष्ठो बृहद्रथन्तरपृष्ठ उपाङ्कपृष्ठ आपर्यपृष्ठस्तनूपृष्ठश्छन्दोरुहस्तोम इत्येतैः प्रकारैर्भवति। तत्रापि तथैव भवति यथा षलहस्य छन्दोगवशेन स्तोत्रियानुरूपक्रिया सामप्रगाथक्रिया च। अग्निं नर इत्यग्निष्टोमसाम्नः स्तोत्रियानुरूपावित्येतदसंयुज्य विधीयमानत्वात्सर्वत्र साधारणम्। बृहद्रथन्तरपृष्ठयोर्यदि भवति बृहत्प्रत्यक्षपृष्ठस्तत्रापि[3] त्वं हि क्षैतवद्यश इत्येतदाज्यं भवति। उभयथापि बृहत्पृष्ठो भवत्येवाथ कस्मादन्वहं बृहत्क्रियत इति लिङ्गात्। तनूपृष्ठस्य सामप्रगाथांश्छस्त्वा योनी परोक्षपृष्ठे। न[2] कण्वबृहद्रथन्तरयोर्योनी। स्वस्ति नो मिमीतामिति च तिस्रोऽन्ते वैश्वदेवानां करोतीत्येतत्समानमन्यत्समूल्हेनेति वचनाद्विश्वजित्यपि सर्वेषु[4] भवति। परोक्षपृष्ठेऽपि न होतुः प्रतिशिल्पक्रिया होत्रकाणां तत्राधिकारात्।

---

## ९.

१. मध्ये दशरात्र इति प्रकृतम्। तस्य पृष्ठ्यषलह उक्तः। त्र्यहश्च छन्दोमा वक्तव्याः। तत्र तावच्छान्दोमिकं प्रथममहर्दश-

---

१ C D प्रकृतिं। ३ C बृहत्प्रत्य॰ D बृहत्प्रत्यक्षपृष्ठ॰।
२ C D om. बृहद्र। ४ C सर्वेषु वर्षेषु।

रात्रस्य सप्तमं तदुच्यते। चतुर्विंशस्तोमं सर्वमहः। होत्रकाणां स्तोमातिशंसनार्थं वचनं। बृहत्पृष्ठमिति स्वश्रुत्यभिप्रायः। बृहद्रथन्तरपृष्ठे ऽपि दशरात्रे युग्मु बृहद्युग्मु रथन्तरमेवं मासे ऽप्यस्य सप्तमस्याह्नो बृहत्पृष्ठतैव वचनात्।

२. प्र वः शुक्राय भानवे भरध्वमित्याज्यमिति (१६. ८) श्रुतेः।

३. वक्ष्यमाणकः।

४. प्र वीरया शुचयो दद्रिरे वामिति वायव्यमिति श्रुतेः तृचम्।

५. ते सत्येन मनसा दीध्याना इत्यैन्द्रवायवस्तृचः।

६. उद्वां चक्षुर्वरुण सुप्रतीकमिति मैत्रावरुणमिति श्रुतेः।

७. आ गोमता नासत्या रथेनेत्याश्विनम्।

८. आ नो देव शवसा याहि शुष्मिन्नित्यैन्द्रम्।

९. प्र वो यज्ञेषु देवयन्तो अर्चन्निति वैश्वदेवम्।

१०. प्र क्षोदसा धायसा सस्र एषेति सारस्वतम्। इत्येतानि प्रउगतृचानि।

११. ये पार्ष्ठिकस्य प्रथमस्य त्र्यहस्य प्रतिपदनुचराः सब्राह्मणस्पत्याश्चोक्तास्ते छन्दोमेषु भवन्ति। स्वरसामानश्च वक्ष्यन्ते तेषु च त एवं भवन्ति। अभिप्लवे च पलके आवृत्या[1] त एवं भवन्ति। एवमतिदिष्टानां विशेषविनियोग उच्यते।

१२. पार्ष्ठिकात्प्रथमादह्नः प्रथमस्य च्छान्दोमिकस्याह्नो भवन्ति।

१३. द्वितीयात्पार्ष्ठिकात् द्वितीयस्य च्छान्दोमिकस्याह्नो भवन्ति।

[1] C D om. आवृत्या।

१४. तृतीयात्पार्ष्ठिकात् प्रतिपदनुचराः सब्राह्मणस्त्यास्तृतीयस्य च्छान्दोमिकस्याह्नो भवन्ति ।

१५. एवमेवेति पाठक्रमेण त्र्यहस्य पूर्वस्याभिप्लविकस्य पार्ष्ठिकाः प्रतिपदनुचराः सब्राह्मणस्त्याः प्रथमत्र्यहोक्ता भवन्ति ।

१६. आभिप्लविकस्येति वर्तते । येन क्रमेण पूर्वस्याभिप्लविकस्य त्र्यहस्य तेनैव क्रमेणोत्तरस्यापि । ये त्र्यहस्य प्रथमस्य प्रतिपदनुचराः सब्राह्मणस्त्यास्ते छन्दोमेष्वेवमादियत्नदोर्निर्देशं[1] कुर्वन्नेकाहिकानां पक्षे प्राप्तिं दर्शयति ।

१७. इत्थं छान्दोमिकेनैव क्रमेण स्वरसाम्नामपि पार्ष्ठिकप्रथमत्र्यहोक्ताः प्रतिपदनुचराः सब्राह्मणस्त्याः । स्वरसामभ्यः प्रत्याणीत्यच प्राकृतविकल्पार्थमेवमित्यतिरेकवचनं । व्युत्क्रमाद्युपदेशः छन्दोमानामभिप्लवस्य च वैश्वदेवसादृश्यार्थं ।

१८. कया शुभा सवयसः सनीळाः । त्यं सु मेषं महया स्वर्विदमिति त्रैष्टुभजागते सूक्ते मरुत्वतीयम् एवमेव श्रुतत्वात् ।

१९. तमु ष्टुहि यो अभिभूत्योजा अभि त्यं मेषं पुरुहूतमृग्मियमिति त्रैष्टुभजागते सूक्ते उभे अभिवती । तद्राथन्तरं रूपं द्वे सूक्ते निष्केवल्यमरुत्वतीययोः शस्येते इति (२६.८) श्रुतत्वात् ।

२०. यत्तु कण्वरथन्तरं कुर्युर्नास्य योनिमनुशंसेत् इति श्रुते ।

२१. ये प्रथमयोः प्रथमद्वितीययोरित्यर्थः । अह्नोः पार्ष्ठिकयोरेवंनामत्वात् । प्रथमे ऽहनि च्छान्दोमिके प्रथमात्पार्ष्ठिकात् ।

---

१ C D चपनिर्देशं C alt. च to त; in marg प देशं।

द्वितीये द्वितीयात्। तृतीये प्रथमात्। राथन्तरं प्रस्तमिति श्रुतिलिङ्गात्। एवमाभिप्लविके प्रथमे प्रथमात्पार्ष्टिकात् द्वितीये द्वितीयात् तृतीये प्रथमादित्यादि ज्ञेयम्।

२२. तत्सवितुर्वरेण्यमिति सावित्रं तृचं सूक्तं। प्रेतां यज्ञस्य शंभुवेति द्यावापृथिवीयं तृचं सूक्तं। अयं देवाय जन्मन इत्यार्भवं तृचं सूक्तं। तृचग्रहणात्। ऋजुनीती नो वरुण इति पञ्चर्चं वैश्वदेवं। आ याहि वनसा सहेति तृचं सूक्तं। सूक्तसङ्ख्यावचनादाम्नानाच्च। छन्दोविचितौ च पितुभृतो न तन्तुमित्युदाहृतत्वात् चतुष्पदा। ओमासश्चर्षणीधृत इति तिस्रः। इत्येष वैश्वदेवे विकारः।

२३. वैश्वानरो न ऊतय इति कश्यपजा पुनराधेयपठिता। वैश्वानरो न आ गमदित्येवमादिके गायत्र्याविह पठिते। एतत्तृचं वैश्वानरीयं[1] सूक्तं। यदस्त्रिष्टुभमिति पञ्चदश नव वेति मारुतं। अर्चन्तस्त्वा हवामह इति जातवेदसीयं। इत्याग्निमारुते विकारः।

---

## १०.

१. दशरात्रस्याष्टममहश्चतुश्चत्वारिंशस्तोमं। स्तोमसङ्ख्या होतृकाणामेकया द्वाभ्यां वा स्तोममतिशंसतीत्येवंप्रयोजना। रथन्तरपृष्ठमिति स्वश्रुतिप्रकाशकम्।

२. अग्निं वो देवमग्निभिः सजोषा इत्याज्यमिति श्रुतेः।

---

१ C (orig.) D एते द्वे वैश्वानरीयं सूक्तं; C (by alt.) एतद्वैश्वानरं सूक्तं।

३. वक्ष्यमाणकः।

४. कुविदङ्ग नमसा ये वृधास इत्येते प्रथमाद्वतीये द्वे वायव्यस्य तृचस्य।

५. आ वायो भूष शुचिपा उप न इत्येका। पूर्वाभ्यां सह समुच्चयार्थश्चकारः।

६. यावत्तरस्तन्वो यावदोज इत्यैन्द्रवायवः।

७. प्रति वां सूर उदिते सूक्तैरिति मैत्रावरुणमिति श्रुतेः।

८. अप त्यसुदयसो नभिजरौत इत्याश्विनमिति श्रुतेः।

९. अयं सोम इन्द्र तुभ्यं सुन्व इत्यैन्द्रमिति श्रुतेः।

१०. प्र ब्रह्माणो अङ्गिरसो नक्षन्तेति वैश्वदेवमिति श्रुतेः।

११. उत स्या नः सरस्वती जुषाणेति सारस्वतमिति श्रुतेः (२६. ११)। इत्येतानि प्रउगतृचानि।

१२. महाँ इन्द्रो नृवदा चर्षणिप्रा इति चैष्टुभानां प्रथमं मरुत्वतीयानामित्येवमारभ्य सर्वमाम्नातं श्रुतौ। स ह वीरः को अपाश्वदिन्द्रमित्यत्र सूक्ते भद्रमिदं रुशमा अग्ने अक्रन्निति चतस्रः सर्वचोद्धर्तव्याः। श्रुत्यन्तरात्। नरस्तैर्देवतासंदेहाच्च।

१३. त्वं महाँ इन्द्र तुभ्यं ह क्षा इति चैष्टुभानां प्रथमं निष्केवल्यानामित्येवमनुक्रम्य श्रुतौ सर्वमाम्नातम्।

१४. चतुर्थपञ्चमेतत्साविचम्।

१५. मही द्यौः पृथिवी च न इति तृचं सूक्तं द्यावापृथिवीयम्। युवाना पितरा पुनरित्यार्भवम्।

१६. देवानामिदवो महदिति नवर्चं वैश्वदेवमिति श्रुतेः।

१७. इमा नु कं भुवना सीषधामेति द्विपदा इति श्रुतेः।

१८. विश्वे देवा ऋतावृध इत्येतास्तिस्रः। सूक्तविद्द्धावश्चे निविदंस्त्रिष्टुभसे ल्लावो देवानामिदवो महदित्यस्मिन्। इति वैश्वदेवे विकारः।

१९. द्वे इह पठिते कल्पे तृतीया चानुपदिष्टाभुद्दृष्टाया-मिति वैश्वानरीयम्।

२०. मारुतमेतच्छ्रुतेः।

२१. दूतं वो विश्ववेदसमिति जातवेदसीयम्। इत्याग्निमारुते विकारः।

---

## ११.

१. दशरात्रस्य नवममहर्वक्ष्यमाणं तदष्टाचत्वारिंशस्तोमं। चोत्रकाणां स्तोमातिशंसनार्था स्तोमसञ्ज्ञा। बृहत्पृष्ठमिति स्तुत्य-भिप्रायः।

२. अगन्म महा नमसा यविष्ठं सोमस्य मा तवसं वक्ष्यग्न इत्येते उभे तदाज्यमिति श्रुतेः।

३. अगन्म महा नमसा यविष्ठं सोमस्य मा तवसं वक्ष्यग्न इत्ये-तयोर्यत्पूर्वं तदेव केवलमाज्यं भवति। तथा च श्रुतेः।

४. वक्ष्यमाणकः।

५. आ वायो भूष शुचिपा उप न इति पञ्चकस्य सूक्तस्य प्रथमातृतीये द्वे ऋचौ उत्तमा चैवं वायव्यतृचः।

६. आ वायो भूषेत्यस्यैव सूक्तस्य द्वितीयाचतुर्थ्यावृचौ। अर्वन्तो न श्रवसो भिक्षमाणा इति च तृतीयेत्येवमैन्द्रवायवस्तृचः।

७. दिवि क्षयन्ता रजसः पृथिव्यामिति मैत्रावरुणमिति श्रुतेः।

८. आ विश्ववाराश्विना गतं न इत्याश्विनमिति श्रुतेः।

९. इन्द्रं नरो नेमधिता हवन्त इत्यैन्द्रमिति श्रुतेः (२६.१५)।

१०. ऊर्ध्वो अग्निः सुमतिं वस्वो अश्रेदिति वैश्वदेवमिति श्रुतेः।

११. प्र क्षोदसा धायसा सस्र एषेति सारस्वतमिति श्रुतेः। इत्येतानि प्रउगशस्त्राणि।

१२. अर्यमा मनुषो देवतातेत्येवमनुक्रम्य पञ्च सूक्तानि मरुत्वतीये प्रशस्त उत्तमे छन्दोम इति श्रुतेः।

१३. आ याह्यो यातु मघवाँ ऋजीषीति त्रैष्टुभानां प्रथमं निष्केवल्यानामित्येवमाद्यनुक्रम्य[1] यजन्ततो निष्केवल्य इति (२६.१६) वचनात् षट्सूक्तं निष्केवल्यम्।

१४. अभि त्वा देव सवितरिति सावित्रं तृचं सूक्तं। प्र वां महि द्यवी अभीति द्यावापृथिवीयं तृचं सूक्तम्।

१५. इन्द्र इषे ददातु न इत्येका। ते नो रत्नानि धत्तनेति द्वे इत्यार्भवमिति श्रुतेः।

१६. अग्निस्त्वये पुरोहित इत्येवमादीनि पञ्च सूक्तानि। सह तृतीयेन सूक्तेन तेषां तृतीयं वा काश्यप इति सविकल्पेन।

---

१ C D om. आदि।

१७. ये त्रिंशति त्रयस्पर इत्येतत्सूक्तमुपोत्तमामुद्धृत्य।

१८. सूक्तमित्यस्यार्थमेकाग्रहणम्।

१९. स्था शर्म पर्वतानामित्येतास्त्वतस्रः।

२०. बभ्रुरेको विषुणः सूनरो युवेति चैतत्सूक्तं भवति। वाशब्दः पूर्वेण सह विकल्पार्थः। मनुप्रवर्हवचनादुभयपक्षे ऽपि भारद्वाजसूक्तो भवति। उभयोः पक्षयोस्तत्त्वत्वात्। ये त्रिंशतीत्युपोत्तमामुद्धृत्य न हि वो अस्त्यर्भक इत्येका शर्मेति चतस्रो बभ्रुरेक इति वा मनुप्रवर्हः। मनोः प्रवर्ह इति इह उद्यमन इत्यस्य मपूर्वस्याजन्तस्य[1] रूपं। प्रकर्षोद्यतमार इत्यर्थः। यस्मादायं सार-स्वास्मान्न किंचिदुद्धर्तव्यम्। तेन त्रिष्टुब्भराद्यपक्षे एकैकामितरेषां सूक्तानामित्युद्धारवचनान्मनुप्रवर्हपक्षो न भवति।

२१. विश्वे देवास आ गतेत्येतद्भारद्वाजं तृचं प्रस्तान्त्यं भवति। इति वैश्वदेवे विकारः। अभि त्वा देवेत्यत आरभ्य भारद्वाज-तृचावधिकः।

२२. दिवि पृष्ट इत्येवमादिके द्वे कल्पवे। तृतीया च सार्व-कामिक्यां। इत्येतत्तृचं वैश्वानरीयम्।

२३. मरुतो यस्य हि क्षय इति मारुतमिति श्रुतेः।

२४. अग्निर्होता पुरोहित इति जातवेदसीयमिति श्रुतेः।

२५. विकार इति वाक्यशेषः। व्यूह्पक्षे छन्दोमानां यद्वक्तव्यं तदुक्तं। समूह्पक्ष इदानीमाह।

---

१ B in marg. यज् instead of यस्य। A हच, C हद्द।

२६. [1]व्यूळ्हपक्षे यानि त्र्यहस्य प्रथमस्य प्रातःसवनतृतीयसवनान्युक्तानि तानि समूळ्हपक्षे छन्दोमानामिति[2]दिश्यन्ते। किंचान्यत्।

२७. यानि च निष्केवल्यमरुत्वतीययोः छन्दोमगतयोर्भागानि व्यूळ्हे ऽभिहितानि तानि समूळ्हपक्ष उत्सृजति। चशब्दात्।

२८. स यो वृषा वृष्ण्येभिः समोका इत्येताः पञ्चदश कयाशुभीयादूर्ध्वं भवन्ति।

२९. यो जात एव प्रथमो मनस्वानित्येतत्सूक्तं तमुष्टुहीयादूर्ध्वं भवति।

३०. [3]इदंद्वयन्तरश्छो दशरात्रः पाचिको ऽस्ति। तस्मिन्क्रियमाणे सर्वे छन्दोममध्यन्दिना होतुर्दिंघूक्ता भवन्ति। सर्वे इति वचनात् संघातप्रयुक्ताः नैकैकत्वेन प्रयुज्यमानाः[4]।

---

१२.

१. दशममहरविवाक्यं वक्तव्यं। तदेवंसंज्ञकं न विवक्तव्यमित्यविवाक्यं। केचित्तु मन्यन्ते न नामधेयमित्येतत् संव्यवहाराभावात्। अविवाक्यमिति गुणविधानमेतत्। नाच विचारयितव्यमिदं साधु कृतमिदमसाध्विति। चतुर्विंशस्तोमं। स्तोमसङ्ख्या स्तोत्रकाणां स्तोमातिशंसनार्थां। अत्यग्निष्टोमो ऽविवाक्यं दशममहरिति कात्यायनस्य।

२. चयस्त्रिंशमग्निष्टोमसामाग्निमारुतस्तोत्रं भवति।

३. मानसं स्तोत्रं चिकं भवति।

---

१ C D om. व्यूळ्हपक्षे। C ins व्यूळ्ह in marg. २ [illegible] चतिदिश्यन्ते।
३ A ins. माध्यन्दिनसवनानि छन्दःप्रयुक्तानि भवन्ति। ४ C (orig.) D •मानात्।

४. वामदेव्यस्य साम्नो या योनिस्तस्यां रथन्तरं पृष्ठं। रथन्तरपृष्ठे गीतिर्भवतीत्यर्थः। एवं च सति यः शस्त्रकृतो विशेषः स उपरिष्टाद्वक्ष्यते।

५. यदि चेत्कश्चिच्छंसतः[१] प्रतिभाषाणिः स्यात्ततो ऽन्यो ऽविनियुक्तस्तदुपदेशार्थं स्वाध्यायवदनुब्रूयात्। नन्दति ह वै यश्चो विदुषागच्छता[२] यतो ऽसम्बद्धं भविष्यत्ययं मे तत्समर्थयिष्यतीति। यदि कश्चित्प्रमत्त उपहन्याद्यस्तदधीयात् स तं देशं पार्श्वतः स्वाध्यायमधीयीतेति (२०. १) श्रुतेः।

६. उद्धृत्यानुष्टुभं छन्दो यत्प्राकृतमितरेषामनुष्टुब्विवर्जितानां छन्दसामनुष्टुप्संपदं संपाद्य पञ्चदशं सहस्रं कार्यमेकस्मिन्स्तवनीये[३]। यथा सहस्रं च पञ्चदशं चानुष्टुभः सुस्तथैतदृचः संपादयेदिति वचनात्। तत्र तावदेतस्मिन्नहनि शस्त्रमनुप्रयोक्तव्यम् तत्तावदुच्यते। आपो रेवतीः क्षयथा हि वस्व इति त्रिरुक्तायां तिस्रः। उपप्रयन्तो अध्वरमिति नव। स हि यो मानुषा युगेति चतस्रः। अग्निं नरो दीधितिभिररण्योरिति तिस्रः। अवस्य पदियुता मस्मिन्नूधन्निति पञ्च। अगन्म महेति तिस्रः। एना वो अग्निं नमसेति प्रगाथाः[४]। अयमग्निः सुवीर्यस्येति प्रगाथाः[५]। त्वामग्ने मनीषिण इति द्वचौ मध्यमं विना। ईळिष्वा हि प्रतीव्यमिति द्वचा दश। पुरु त्वा दाश्वान्वोच इति च तिस्रः। वेदिषदे प्रिय-

१ A C (orig.) D छन्दसः। २ A om. the passage from गच्छता to श्रुतेः।
३ C (sec. h.) adds सति। ४ C (in marg.) चयः।
५ C (in marg.) चयः।

धामाय सुषुत इति सप्त। जनस्य गोपा अजनिष्ट जागृविरिति षट्। अग्निं तं मन्ये यो वसुरिति दश। कस्त उषः कधप्रिय इति तिस्रः। यावयद्द्वेषसं त्वेति चतस्रः। प्रति ष्या सूनरी जनीति तिस्रः। [1]उषो रुरुचे युवतिर्न योषेति षट्। प्रति स्तोमेभिरुषसं वसिष्ठा इति तिस्रः। प्रत्यु अदर्श्यायतीति षट्। उषो यदद्य भानुनेति द्वे। उषस्तच्चित्रमा भरेति तिस्रः। एता उ त्या इति चतस्रः। महे नो दश। अश्विना यज्वरीरिष इति तिस्रः। आ मे हवं नव। आ शुभ्रा यातमिति तिस्रः। आ भातीति द्वे। उप त्वा वह्नी इति द्वे। इमा उ वां दिविष्टय इति षट्। अयं वां मधुमत्तम इति प्रगाथौ। युवोरु षू रथमिति तिस्रस्त्रिश्चिन्नो अद्येति तिस्रः। क्व स्विदद्य कतमास्वश्विनेति चतस्रः। प्रति प्रियतममिति नव। त्रिरुत्तमया परिधाय एकादश। एष प्रातरनुवाकः।

प्रशास्तुः स्तोकीयाः। जुषस्व सप्रथस्तममिति प्रथमा त्रिः। इमं नो यज्ञमित्येका। अभि प्रवन्तेति द्वे। तुभ्यं श्चोतन्त्यध्रिगो शचीव इति त्रिर्द्वितीया।

अच्छावाकस्य। अच्छा नः शीरशोचिषमिति तिस्रः। यजमान होतरध्वर्यो इत्यादिको निगदः। उन्नीयमानाय प्रति श्रुताय वो धृषदिति तिस्रः। अश्वाश्वा इदश्व इति चतुर्थी। गणधर्मस्तु प्रकृतिवत्।

आज्यमुच्यते। ओँ॰ अग्निर्ज्योतिरित्यारभ्य प्रकृतिवत्। सो

1 from उषो up to षट् om. in D.

अध्वरा करति जातवेदो३ अग्ने समध। अश्वं न स्तोमैः क्रतुं न भद्रं। हृदिस्पृशमृध्याम त ओहो३ अधा ह्यग्न इत्यादि। शों॰ शिवा नः सख्या सन्तु भ्रात्रेति। माधुच्छन्दसः प्रउगः। विश्वे देवासो अस्रिध इति परिधानीया।

मैत्रावरुणस्याज्यं। शों॰ ता नः शक्तमिति स्तोत्रियः। शों॰ आ नो मित्रावरुणेत्यनुरूपः। शों॰ आ नो गन्तं रिशादसेत्येका। प्र वो मित्रायेति पञ्च। प्र मित्रयोरित्यष्टौ शस्त्वा शों॰ ते स्याम देव परिधानीया।

ब्राह्मणाच्छंसिन आज्यम्। शों॰ युञ्जन्ति ब्रध्नमिति स्तोत्रियः। शों॰ आ याहि सुषुमा हि त इत्यनुरूपः। उत्था मन्दन्तु स्तोमा इति तु [1]छन्दोगाः स्तोत्रियं कुर्वन्ति। तत्रायमेवानुरूपः। उदयनीये परे। सुरूपकृत्नुमूतय इति महाव्रते[2]। तथा याहि सुषुमा हि त इति द्वादश। प्रकृतं सूक्तः। शोंसावो आ नो याहि सुतावत इति दश। इन्द्र त्वा वृषभं वयमिति द्वे। उद् घेदभि श्रुतामघं। शोंसावो स न इन्द्रः शिवः सखेति परिधानीया। अच्छावाकस्याज्यं। शोंसावो ता हि शश्वन्त ईळत इति स्तोत्रियः। शोंसावो इन्द्राग्नी आ गतं सुतमित्यनुरूपः। शोंसावो तोशा वृत्रहणा हुव इति षट्। इहेन्द्राग्नी उप ह्वय इति पञ्च। इन्द्राग्नी अवसा गतमिति द्वे। शोंसावो गोमद्धिरण्यवद्वस्विति परिधानीया। समाप्तं प्रातःसवनम्।

---

१ D छन्दोगः। C (orig.) छन्दो गाः स्तो॰।
२ C D महाव्रते परे। परे seems to be struck out in C.

मृजानो वारे पवमानो अव्यय इत्येता यावस्तुतः। उत्तिष्ठन्नो-जसा सह आतं हविरिति समानं॥ मरुत्वतीयं। अध्वर्यो शोंसावो चिकद्रुकेषु महिषो यवाशिरं तुविशुष्म इत्येका। तुविशुष्मेति द्वे। शोंसावो इदं वसो सुतमन्ध इत्यनुचरः। शोंसावो इन्द्र नेदीय एदिहीति प्रगाथः। शोंसावो प्र नूनं ब्रह्मणस्पतिरिति प्रगाथः। शोंसावो अग्निर्नेतेत्येका। शोंसावो त्वं सोम क्रतुभिरित्येका। शोंसावो पिन्वन्त्यप इत्येका। बृहदिन्द्राय गायतेति प्रगाथः। तथा प्र व इन्द्राय बृहत इति। शोंसावो जनिष्ठा उग्रः सहस इत्यादि प्रकृतिवच्छेषं।

निष्केवल्यम्। अध्वर्यो शोंसावो कया नश्चित्र आ भुवदिति स्तोत्रियः। शोंसावो कया त्वं न ऊत्येत्यनुरूपः। शोंसावो यदा-वानेति धाय्या। शोंसावो पिबा सुतस्य रसिन इति प्रगाथः। अभि त्वा शूर नोनुमः। अभि त्वा पूर्वपीतये। सखाय आ शिषामहीति नव। आ धूर्ष्वस्मै दधाताश्वान्। वज्रमेको बिभर्ति हस्त आहितं। तिग्ममेको बिभर्ति हस्त आयुधं[1]। शोंसावो इन्द्रस्य नु वीर्याणि प्र वोचमित्यादि प्रकृतिवत्।

मैत्रावरुणस्य पृष्ठं। अध्वर्यो शोंसावो मा चिदन्यद्वि शंसतेति[2] स्तोत्रियः प्रगाथः। मा भेम मा श्रमिष्मेत्यनुरूपः। कस्तमिन्द्रेति सामप्रगाथः। अप प्राच इन्द्रेत्युभयमुखीया। आ धूर्ष्वस्मै दधाता-श्वानिति द्विपदा। सद्यो ह जात इति सूक्तं। एवा त्वामिन्द्र

---

१ तिग्ममेको बिभर्ति हस्त आयुधम् is struck out in O.
२ O in marg. मैत्रावरुणस्य।

यश्चिच्चिमि सूक्तं । आहूयोत्तमया परिधानीया । स्तोत्रिये लिखित एवाहावः । अनुरूपे शोंसावो इति । तथा सामप्रगाथे तस्य चानन्तरं परिधानीयायै चेति । उक्तं मैत्रावरुणस्य पृष्ठम्[१] । ब्राह्मणाच्छंसिन उच्यते । अध्वर्यो शोंसावो तं वो दस्ममिति स्तोत्रियः[२] प्रगाथः । शोंसावो तत्त्वा यामि सुवीर्यमित्यनुरूपः प्रगाथ एव । शोंसावो कं नव्यो अतसीनामिति द्वे । शोंसावो ब्रह्मणा त इति सोक्थमुखीया[३] । छन्दोगचर्यादेवं । स्वशाखाभिप्रायमु । उदु त्ये मधुमत्तमा इति स्तोत्रियः । उदिन्न्वस्य रिच्यत इत्यनुरूपः । यद्वा त्रिकद्रुकेषु महिषो यवाशिरं तुविश्र इति स्तोत्रियः । तव त्यं नर्यं नृतो ऽप इन्द्र । तमिन्द्रं जोहवीमि । विश्वाः पृतना इत्यनुरूपः । ततः कद्वान् । तत उक्थमुखीया । ततो रायस्कामो वज्रहस्तमिति द्विपदा । तत इन्द्रः पूर्भिदातिरद्दिति सूक्तं । तत उदु ब्रह्माणीति यथोक्त आहावः प्रस्तप्रैष्य ।

अच्छावाकस्य पृष्ठम् । अध्वर्यो शोंसावो तरोभिर्वो विदद्वसुमिति स्तोत्रियः प्रगाथः । शोंसावो तरणिरित्सिषासतीत्यनुरूपः प्रगाथ एव । शोंसावो कद्रू न्वस्याकृतमिति कद्वान्[४] प्रगाथः । शोंसावो उरुं नो लोकमनु नेषि विद्वानित्येका[५] । अया वाजं देवहितं सनेमेति[६] द्विपदा । भूय इद्वावृधे वीर्यायेति सूक्तं ।

---

१ D om. the text from परिधानीया up to चानन्तरं । २ C D om. प्रगाथः । ३ A एका instead of उक्थमुखीया । C एका over the line. ४ C D om. कद्वान् । ५ C D उक्थमुखीया instead of एका । C एका over the line. ६ The MSS. differ as to the length of the quoted Pratîkas. I have not registered these minutiæ.

अभि तष्टेव दीधया मनीषामित्यस्योत्तमया आहावपूर्वया परिदधाति।

वैश्वदेवम्। अध्वर्यो शोंसावो अभि त्यं देवं सवितारमोण्योः कविक्रतुमित्येका। अस्य हि स्वयशस्तरमिति द्वे। इति वैश्वदेवस्य प्रातिपदिकस्तृचः। शोंसावो अभि त्वा देव सवितरित्यनुचरस्तृचः। शोंसावो अभूद्देवः सविता वन्द्यो नु न इति सनिविल्कं सूक्तं। शोंसावो एकया च दशभिश्च स्वभूते। शोंसावो प्र द्यावा यज्ञैः पृथिवी ऋतावृधेति सनिविल्कं सूक्तं। शोंसावो सुरूपकृत्नुमूतये। शोंसावो तदस्य सुवृतं विश्वतापस इति सनिविल्कं सूक्तं। शोंसावो अयं वेनश्चोदयत्पृश्निगर्भाः। शोंसावो येभ्यो माता मधुमत्पिन्वते पयः। शोंसावो एवा पित्रे विश्वदेवाय वृष्णे। शोंसावो प्र शुक्रैतु देवी मनीषेति सूक्तं। आ नो भद्राः क्रतवो यन्तु विश्वत इति सूक्तं सनिविल्कं। शोंसावो अदितिर्द्यौरदितिरन्तरिक्षमिति परिधानीया। उक्थवीर्यं याज्या च प्रकृतिवत्। द्वितीया ह्रतयाज्या भवा मित्रो न शेव्य इति।

आग्निमारुतं। अध्वर्यो शोंसावो वैश्वानराय पृथुपाजसे विप इति सनिविल्कं सूक्तं। शोंसावो आ ते पितर्मरुतां सुम्नमेतु[१]। शोंसावो प्रत्वक्षसः प्रतवस इति सनिविल्कं सूक्तं। शोंसावो अग्निं नरो दीधितिभिररण्योरिति स्तोत्रियः। शोंसावो प्र ते अग्नयो ऽग्निभ्यो वरं निरित्यनुरूपः। शोंसावो प्र तव्यसीं नव्यसीं धीति-

१ C D ins इत्येका।

मन्नय इति सनिविदं सूक्तं। श्रोंसावो आपो हि ष्ठा मयोभुव इत्यादि प्रकृतिवच्छेषम्।

अथ समूळ्हे ऽतिरिक्तोक्थम्। अध्वर्यो श्रोंश्रोंवो आयं गौः पृश्निरक्रमीदिति स्तोत्रियः। श्रोंसावो मही द्यौः पृथिवी च न इत्यनुरूपः। श्रोंसावो तं प्रत्नथा पूर्वथा विश्वथेमथेति चयोदश। श्रोंसावो यज्ञो बभूव स आबभूवेति परिधानीया। प्रजापते न त्वदेतान्यन्य इति याज्या॥ इति प्रातरनुवाके शतद्वयं पञ्चदशाधिकमनुष्टुभां संपन्नं। तत्पूर्वलिखितमेवानुष्टुभां प्रातरनुवाकः पञ्चदशे शते इत्यत्र सूत्रे। अष्टौ शतान्यत्रान्यनुष्टुभां। तत्र गायत्रीणां शतद्वयं पञ्चाशदधिकं षोडशोष्णिहः। अष्टौ विराजः। चित्वारिंशद्बृहत्यः। षोडश पङ्क्तयः। शतद्वयमेकषष्टिश्च त्रिष्टुभः। अशीतिर्जगत्यः। द्विपदाः षड्विंशतिः। द्वे शक्वर्यौ। षळष्टय इति।

अथ गायत्र्यस्तिस्रो ऽपोनप्त्रीये। एकचत्वारिंशत्पशुकर्मणि वपान्ते द्वे हविष्पङ्क्त्यां। हिदेवत्येऽष्टौ। चयोदशौषीयमानसूक्ते। षट् प्रस्थितयाज्याः[1]। प्रति श्रुतायेति पञ्च। प्रातर्यावभिरित्येका। द्वादशर्तुयाज्याः। चयोविंशतिः प्रउगे सयाज्ये। षड्विंशतिःषड्विंशतिर्होत्रकाणामाज्येषु। चयस्त्रिंशदभिप्लवे। एका दधिघर्मे। पञ्च मरुत्वतीये। अष्टौ निष्केवल्ये। षड्वैश्वदेवे। तिस्र आग्निमारुते। द्वे पत्नीसंयाजेष्विति गायत्र्यः।

अथोष्णिहः। तिस्रो ऽभिप्लवे। चतस्रो मरुत्वतीये। नव निष्केवल्ये इत्युष्णिहः।

1 A °याज्याः। C D °याज्याश्च।

अथ विराजः । आज्यनिष्केवल्ययोर्याज्ये । अग्निष्टोमसाम्नश्च स्तोत्रियानुरूपयोः षळिति ।

अथ बृहत्यः । नव बहिःकर्मण्यच्छावाकस्य । चतस्रो मरुत्वतीये । तिस्रो निष्केवल्ये । नवनव शस्त्रेषु होत्रकाणामिति बृहत्यः ।

अथ पङ्क्तयः । स्तोकीयास्तिस्रः । एकाच्छावाकस्य बहिःकर्मणि । एकैवाभिषवे । द्वे मरुत्वतीये । तिस्रो निष्केवल्ये । एकैका होत्रकाणां शस्त्रेषु । तिस्र आग्निमारुते इति पङ्क्तयः ।

अथ त्रिष्टुभः । अपोनप्त्रीये विंशतिः । पशुकर्मणि वपान्ते त्रयोविंशतिः । सप्ताभिषवे । द्वे दधिघर्मे । चतस्रः पशुपुरोळाशे । द्वे हविष्पंक्त्यां । चतुर्दशोन्नीयमानसूक्ते । सप्त प्रस्थितयाज्याः । द्वे मरुत्वतीयपक्षे । शस्त्रे षोळश सयाज्ये । अष्टादश निष्केवल्ये । विंशतिर्मैत्रावरुणस्य शस्त्रे । एकविंशतिर्ब्राह्मणाच्छंसिनः । एकोनविंशतिरच्छावाकस्य । द्वे आदित्यपक्षे । सप्तदशकं मनोतासूक्तं । षट् पशुयागे । त्रयोदशोन्नीयमानसूक्ते । इन्द्राविष्णू पिबतं मध्वो अस्येति त्रिष्टुप् प्रस्थितयाज्या । सावित्रपक्षस्य च पुरोनुवाक्या । सूक्तस्य च सावित्रस्याद्योत्तमे । एकया च दशभिश्चेति वायव्या । ऋभुर्भराय सं शिशातु सातिमित्यार्भवस्योत्तमा । अयं वेनश्चोदयत्पृश्निगर्भाः[1] । एवा पित्रे विश्वदेवाय वृष्णे[2] । ता नो रायश्चाति-षाचो वसूनीति चतस्रः । षष्ठी चानोभद्रीयस्य । भद्रं कर्णेभिरिति च । विश्वे देवाः शृणुतेमं हवं मे । घृतं मिमिक्षे घृतमस्य

१ C D ins. एता । C sec. h. इति ।  २ C D ins. इत्येका ।

योनिः[१]। त्वं सोम पितृभिः संविदानः[२] भवा मित्रो न शेव्यो घृताहुतिः। ऐभिरग्ने सरथं याह्यर्वाङ्। आ ते पितर्मरुतां सुम्नमेतु। अप्रयुच्छन्नप्रयुच्छद्भिरग्ने। उत नो ऽहिर्बुध्न्यः शृणोतु। उत ग्ना व्यन्तु देवपत्नीः। पेध्यस्तिस्रः। स्वादुष्किलीयास्तिस्रः[३]। ययोरोजसा स्कभिता रजांसि। विष्णोर्नु कं वीर्याणि प्र वोचम्। एवा न इन्द्रो मघवा विरप्शीति तिस्रः। तिष्ठा सु कं मघवन्मा परा गाः। अतिप्रेषस्य पुरोऽनुवाक्या। परा याहि मघवन्ना च याहीति पञ्च पत्नीसंयाजेष्विति त्रिष्टुभः।

अथ जगत्यः। एका अपोनप्त्रीये। षोडशाभिप्लवे। पिन्वन्त्यप इत्येका। द्वे हविष्पंक्त्यां। षट् प्रस्थितयाज्याः। सावित्रग्रहस्य च याज्या। चतस्रः सावित्रे सूक्ते। पञ्च द्यावापृथिवीये। चतस्र आर्भवे। येभ्यो मातेत्येका। पञ्चानोभद्रीये। वैश्वानराय पृथुपाजस इति त्रयोदश। प्रतवसः प्रतवसो विरप्शिन इति षट्। प्र तव्यसीं नव्यसीं धीतिमग्नय इति सप्त। देवानां पत्नीरित्येका। राकामहमिति द्वे। तन्तुं तन्वन्नित्येका। अग्ने मरुद्भिः शुभयद्भिरित्येका। युनज्मि ते ब्रह्मणा केशिनेत्येका। युनज्म देवानां पत्नीरिति।

अथ द्विपदाः। द्वे निष्केवल्ये। एकैका होत्रकाणां शस्त्रेषु। एकविंशतिर्वैश्वदेव इति। अथाष्टयः। त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्म इत्येषा त्रिः। अभि त्यं देवं सवितारमोण्योरित्येषा[४] त्रिरिति।

---

१ C D ins. इत्येका।
२ C D ins. इत्येका।
३ C (orig.) D om. स्वादुष्किलीयास्तिस्रः।
४ C D इत्येषापो चौनिः।

अथ शक्वर्यौ। तच्छंयोरा वृणीमह इति शक्वरी द्विः प्रयुज्यते एवमेतद्यथोपन्यस्तदृढीकरणाय संपत्त्यर्थैः श्लोकैरनूद्यते।

शतद्वयं सपञ्चाशमेष इत्येत्यतः परम्।
गायत्र्युष्णिहश्चात्र षोडशाष्टौ विराजकाः ॥१॥
बृहत्यो ऽपि भवन्त्यत्र चत्वारिंशत्त्रिभिः सह।
एकषष्ट्यधिकं विद्धि त्रिष्टुभां च शतद्वयम् ॥२॥
पङ्क्त्यः षोडशाशीतिर्जगतीनां सुनिश्चिता।
द्विपदा विंशतिः षट् च द्वे शक्वर्यौ च सप्तयः ॥३॥
उक्ता एवं पृथग्भूताः क्रियन्ते ऽनुष्टुभो यदा।
तदानेन प्रकारेणान्यथा वा यथेच्छया ॥४॥
शक्वर्यो[1] बृहतीरष्टौ गायत्रीणां गणे क्षिपेत्।
अनुष्टुभस्तथैताः स्युस्त्रिष्टुमेकातिरिच्यते ॥५॥
[2]त्रिष्टुभात्पूर्वसंख्यातादेकषष्ट्याच्छतद्वयात्।
अष्टाशत्यास्त्रिरन्वेति चतुरक्षरवर्जिता ॥६॥
चतुरक्षरहीनानि शतानि त्रीण्यनुष्टुभाम्।
संपद्यान्यूनषष्टानि त्रिष्टुभस्त्वपि संशयः (३५९) ॥७॥
उष्णिहश्च विराजश्च पङ्क्त्यश्चैकधा कृताः।
द्विचत्वारिंशदेताः स्युः श्रुतेरन्या अनुष्टुभः ॥८॥
जगतीनामशीतिर्या तद्विंशतिशतं भवेत्।
संपन्ना षोडश ज्ञेया द्विपदोत्था अनुष्टुभः ॥९॥

---

१ A महर्षे। २ by alt, A C त्रिष्टुभात्।

सप्ताग्नीतानि सत्रैव (७८७) पूर्वोक्तानि ह्यनुष्टुभाम्।
द्वादशाग्रे तमित्यष्टेः[१] संपन्नाः श्रुतिचोदिताः ॥१०॥
[२]गायत्र्यादिगणास्त्रिष्टुप्पादश्च द्विपदोत्थितः।
चतुरक्षरमादाय पूरयेत्त्रिष्टुभं ततः ॥११॥
शेषैरनुष्टुभं कुर्यादेवमष्टौ शतानि तु।
षोडशैवातिरिक्तानि[३] अक्षराणीह योजयेत् ॥१२॥
त्रिष्टुभश्च द्विरुक्तेयं[४] द्वादशाक्षरहीनिका।
तुभ्यं श्चोतन्ति तिसृभिरेवं षोडश योजयेत् ॥१३॥
सहस्रमेतच्छ्रुत्युक्तं[५] पूर्णं पञ्चदशाधिकम्।
भक्षमानरनुवाकं संपदानुष्टुभामिह ॥१४॥
अग्निरत्राभिनोक्ता अत्रैव प्रोक्ता लिख्यन्ते।
अथान्यानुष्टुबुद्धारः स हि सर्वत्र चोदितः।
न यथर्क्षाभियाभावे नोद्धारः[६] स्यादनुष्टुभाम् ॥
प्रजाकामवशायागः सिनीवाल्याः क्रियेत चेत्।
नात्र तत्र तु कर्तव्ये स्ते स्वस्त्या[७] अनुष्टुभौ ॥
उद्धृत्यानुष्टुभं यस्माच्छन्दसां संपदुच्यते।
शतातिरात्र उक्थ्यादिस्तस्मान्नानुष्टुभस्त्यजेत् ॥
उष्क्रयस्वेति न त्याज्या सप्तानां चोदनारम्भात्।
ये तृचास इति तेषां त्यक्तव्या तद्विचारितम् ॥

१ A चाव्ये। २ C ॰गणात्। ३ A षोडशैवा॰। ४ C त्रिरुक्ते॰ D ॰भ त्रित्ते॰। ५ C एतत्पृक्तं D प्रयुक्तं। ६ I am not able to make out the meaning of this and several other passages in these verses. I have given the text as it is in the MSS: ७ D स्वस्त्य च॰।

अर्ध शक्वर्यौ। तच्छंयोरा वृणीमह इति शक्वरी द्विः प्रयुज्यते।
एवमेतद्यथोपन्यस्तदृढीकरणाय संपत्त्यर्थैः श्लोकैरनूद्यते।

शतद्वयं सपञ्चाशमथ ह्येत्यतः परम्।
गायत्र्युष्णिहश्चाथ षोडशाष्टौ विराजकाः ॥१॥
बृहत्यो ऽपि भवन्त्यत्र चत्वारिंशत्त्रिभिः सह।
एकपञ्चाधिकं विद्धि त्रिष्टुभां च शतद्वयम् ॥२॥
पङ्क्तयः षोडशाशीतिर्जगतीनां सुनिश्चिता।
द्विपदा विंशतिः षट् च द्वे शक्वर्यौ चलष्टयः ॥३॥
उक्ता एवं पृथग्भूताः क्रियन्ते ऽनुष्टुभो यदा।
तदानेन प्रकारेणान्यथा वा यथेच्छया ॥४॥
शक्वर्यौ[1] बृहतीरष्टौ गायत्रीणां गणे क्षिपेत्।
अनुष्टुभस्तथैताः स्युस्त्रिष्टुबेकातिरिच्यते ॥५॥
[2]त्रैष्टुभात्पूर्वसंख्यातादेकपञ्चाच्छतद्वयात्।
अष्टाशतिरन्येपि चतुरक्षरवर्जिता ॥६॥
चतुरक्षरहीनानि शतानि षोष्यनुष्टुभाम्।
संपन्नान्यूनषष्ठानि त्रिष्टुप्स्वपि न संशयः (२५९) ॥७॥
उष्णिहश्च विराजश्च पङ्क्तयश्चैकधा कृताः।
द्विचत्वारिंशदेताः स्युः श्रुतेरन्या अनुष्टुभः ॥८॥
जगतीनामशीतिर्या तद्विंशतियतं भवेत्।
संपन्ना षोडश ज्ञेया द्विपदोत्था अनुष्टुभः ॥९॥

---

१ A शक्वर्यो। २ by alt. A C त्रिष्टुभात्।

सप्ताशीतानि सप्तैव (७८७) पूर्वोक्तानि ह्यनुष्टुभाम् ।
द्वादशाग्ने तमित्यष्टेः[1] संपन्नाः श्रुतिचोदिताः ॥ १० ॥
[2]गायत्र्यादिगणास्त्रिष्टुप्पादस्य द्विपदोत्थितः ।
चतुरक्षरमादाय पूरयेत्त्रिष्टुभं ततः ॥ ११ ॥
शेषैरनुष्टुभं कुर्यादेवमष्टौ शतानि तु ।
षोडशैवातिरिक्तानि[3] अक्षराणीह योजयेत् ॥ १२ ॥
त्रिष्टुभश्च द्विरुक्तेयं[4] द्वादशाक्षरहीनिका ।
तुभ्यं श्चोतन्ति तिसृभिरेवं षोडश योजयेत् ॥ १३ ॥
चतुःसमेतच्छ्रुत्युक्तं[5] पूर्णं पञ्चदशाधिकम् ।
सहस्रातरनुवाकं संपदानुष्टुभामिह ॥ १४ ॥

अग्निस्वामिनोक्ता अत्रैव श्लोका लिख्यन्ते ।

अथान्यानुष्टुभुद्धारः स हि सर्वत्र चोदितः ।
न पथ्यांप्रियाभावे नोद्धारः[6] स्यादनुष्टुभाम् ॥
प्रजाकामवशायागः सिनीवाल्याः क्रियेत चेत् ।
नात्र तत्र तु कर्तव्ये स्ते खल्वस्या[7] अनुष्टुभौ ॥
उद्धृत्यानुष्टुभं यस्माच्छन्दसा संपदुच्यते ।
शतातिरात्र उक्थ्यादेस्तस्मात्तानुष्टुभस्त्यजेत् ॥
उच्छ्रयस्वेति न त्याज्या सप्तानां चोदनारम्भात् ।
ये हवास इति त्वेषा व्यक्त्या तद्विचारितम् ॥

---

१ A °ष्टे। २ C °गणात्। ३ A षोडशैवै°। ४ C त्रिरुक्तो° D °स त्रिरुक्ते°।
५ C °तत्पूयुक्तं D °युक्तं। ६ I am not able to make out the meaning of this and several other passages in these verses. I have given the text as it is in the MSS. ७ D °संखल्व च°।

देवो ऽग्निस्त्वभिव्यक्तिरेषा पृथक्त्वादिगण्यताम् ।
इति श्रान्नेतरः शुद्धस्त्वप्रत्यायको ह्ययम् ॥
सर्वा दाशतयीष्वेता उत्तरास्तु सुभेषजः ।
अनेन व्यपदेशेन प्रत्युत्पस्या अनुष्टुता ॥
चिकद्रुकेष्वभि त्यं च शंयोर्वाके तथैव च ।
द्वावतिच्छन्दसौ वर्गावतिवर्गोत्तराश्रयात् ॥
अनुष्टुभा इति चेत्तच प्रतिपत्संपदश्रुतेः ।
सर्वार्थौ चेतरच्छन्दो[1] विराजस्तेन न त्यजेत् ॥
विराजस्त्रिष्टुभोरैक्याद्वृद्धियेरस्विराजो ऽपि ।
संपत्स्याच्छन्दसामच सवनीयविशेषणात् ॥
अतिरिक्तक्रियायां हि संपन्नैवेति[2] चेद्भवेत् ।
एकस्मिन्निति चारम्भादधिकेषु समादरः ॥
एकस्मिन्नित्यपत्यैतद्वाक्यं स्यादविवक्षितम् ।
इति श्रामच येनोक्तमनारम्भो भवेद्यस्य ॥
आज्यभागौ विकल्पेन शंयोर्वाकस्य यः परः ।
महासामपरात् सा च सिनीवाली च राका च ॥
तथा पशुपुरोळाशः स्विष्टकृतश्च यो भवेत् ।
एकाहेन च विधन्तो तायमानस्य रूपाणि ॥
पूर्वकारिवमात्कर्म समाप्ते यदि कल्पितम् ।
क्रियेताभ्यधिकं किञ्चिदूनं वापि कदा चन ॥

---

१ B चेतरच्छन्दो D चेतच्छन्दो। २ A संपन्नेदिति C संपन्नैवेति; over the line ति D संपन्नैवेति।

स्वशास्त्रविहितं वा स्यात् पूर्वकारी न चेत् कुर्यात्।
संपत् तथापि संपाद्या तदारम्भः[१] प्रयोजनम्॥
अथार्थागौप्रयोगेन क्रतुयाज्या विकल्पने।
न चेत्तथापि पूर्वेण संपत्तत्रावपेदिह॥
यथाकामी प्रकरणे ज्ञापकं परमेकेति।
ऊर्ध्वं चोक्थ्यसूक्तीयाया आवापो ऽत्रापि चोदितः॥
अथवोक्तीयमानेषु सूक्तानां परिमाणतः।
श्रुतेः संपत्तु संपाद्या श्रुतिदृष्टा क्रिया यदि॥
अदृष्टं तु यदस्माकं क्रियेताभ्यधिकं स्थितम्।
संपत्तत्र न संपाद्या ज्ञापकं पशवो ऽधिकाः॥
वाजिनं च न संख्येयं तद्वाक्यमचोदितम्।
पयस्यांगमिदं होति स्वादियं कस्य चिन्मतिः॥
भाकमेधेषु तथापि प्रतिषेधाच्च युज्यते।
गणते चातिरिक्तोक्थे समाख्या हितयोस्तथा॥
अयम्नं चैव भेदात्स्यात्संपदा विषमे हिते।
सोमातिरेकग्रस्तं च वै शब्दानुक्तकारणम्॥
ग्रस्तं कालप्रभेदे यद्भावभेदे च यद्भवेत्।
संपत्तथापि संपाद्या तत्रैतन्नास्ति कारणम्॥
[२]सोमारम्भात्त्रिष्टुप्स्तोमेन संपाद्या भवेत्संपत्।
कार्यस्त्वनुष्टुबुद्धारः सूत्रारम्भात्पुनःपुनः॥
उक्तारभ्यो विशेषार्थी न तेषां चास्ति चोदना।

१ C D om. २ C सोमा॰।

कुर्युरित्युपदेशाद्धि तस्मात्तेषु न संपत्स्यात् ॥
अनुष्टुप्संपदमत उच्यमानां निबोधत ।
द्वे शतेऽनुवाके तु शते पञ्चदशाधिके ॥
जगत्येकापोनप्त्रीये त्रिष्टुभां विंशतिस्तिस्रः ।
गायत्र्यो यस्य पीत्वेति न संख्या निगदा गण्याः ॥
संपदानुष्टुभो ज्ञेया एकविंशत्संपादिका ।
धत्परिव्ययणीयादि सवनीयान्तमत्र तु ॥
आज्यभागावसंख्याय संख्यायैकं पशु[१] तथा ।
आप्रियस्त्रिष्टुभः संख्यां[२] (?) सर्वेषां संपदस्तथा ॥
प्रजाकामवदाग्नेय्यां नाराशंस्यपि वासिष्ठी ।
गायत्री वा भवेच्छस्त्वा संपद्गण्या ऋचो ऽत्र तु[३] ॥
सतोबृहत्यस्तिस्रो ऽत्र द्वाविंशतिश्च त्रिष्टुभः ।
तुभ्यं श्चोतन्ति वाप्येषा विराड्रूपाष्टकोत्तमा ॥
चत्वारिंशच्च तिस्रश्च गायत्र्यः स्युरनुष्टुभाम् ।
अष्टाचत्वारिंशत्[४] संपन्नाः पोत्रशास्त्रवर्जिताः ॥
द्विदेवत्यादि चाध्यात् शास्त्रतुयाज्या ऋचो[५] ऽत्र तु ।
बृहत्यो नव गायत्र्यः चत्वारिंशच्च पञ्च च ॥
एका सतोबृहत्यत्र संपदानुष्टुभः पञ्च ।
चत्वारिंशच्च ताः सार्धं चतुर्भिः स्युरिहाक्षरैः ॥
संपदानुष्टुभश्चाज्ये दश तिस्रश्च निश्चिताः ।

१ C D पशुष्। २ C D सख्यां। ३ C seems to read ऋचो [illegible] तु।
४ D ०शिच C शिष्ट०। ५ C D ऋचो।

मयाख्ये प्रउगे च स्युः संपदा दश सप्त च ॥
शेषाख्येषु मयाख्येषु षष्टिरध्यर्धया विना।
सवने ऽनुष्टुभां संपच्चत्वारिंशच्च पञ्च च ॥
शतानि पञ्च चत्वार्यक्षराणि च विंशतिः।
पावस्तोत्रे तु गायत्र्यस्त्रयस्त्रिंशत्तथोष्णिहः ॥
तिस्रः सतोबृहत्येका जगत्यः षोडशैव तु।
त्रिष्टुभः सप्त संपन्ना द्विषष्टिः स्यात्सपादिका ॥
दधिघर्मादिशस्त्रात् प्राक् स्याच्चेत्पशुपुरोडाशः।
तत्स्विष्टकृत्पृथक्के तु त्रिंशच्चैकाच त्रिष्टुभाम् ॥
गायत्र्येका च संपन्नाश्चत्वारिंशदनुष्टुभः।
अधिका तिसृभिर्ज्ञेया अक्षराणि च द्वादश ॥
एका मरुत्वतीये तु मयाख्ये जगत्यस्तिस्रः।
अष्टयः पञ्च गायत्र्यश्चतस्रः ककुभस्तथा ॥
बृहत्यः सतोबृहत्यस्त्रिष्टुभः षोडशैव तु।
चत्वारिंशच्चतस्रश्च संपन्नाः पादवर्जिताः[१] ॥
निष्केवल्ये मयाख्ये तु गायत्र्यो ऽष्टौ विराडेका।
तिस्रः सतोबृहत्यो ऽत्र बृहत्यस्तिस्र एव च ॥
त्रिष्टुभो ऽष्टादश ज्ञेया द्विपदे द्वे तथोष्णिहः।
चत्वारिंशत्तथाष्टाभिः संपन्नाः स्युरनुष्टुभाम् ॥
मैत्रावरुणशस्त्रे तु मयाख्ये द्विपदैकिका।
एका सतोबृहत्यत्र त्रिष्टुभो दश सप्त च ॥

---

१ C पादावर्जिताः।

त्रिष्टुभस्त्रिर्विराट्स्थानान्मुख्यास्याश्चवक्को[1] नव ।
बृहत्यः संपदा तु स्याच्चत्वारिंशद्दिनोष्णिहः ॥
ब्राह्मणाच्छंसिनः शस्त्रे मार्हते सौचिये शते ।
एका सतोबृहत्यश्च सयाज्ये द्विपदा तथा ॥
बृहत्यो नव विज्ञेयाः त्रिष्टुभश्चैकविंशतिः ।
संपदानुष्टुभस्तेनाश्चत्वारिंशच्छोष्णिहा ॥
अच्छावाकस्य त्रिष्टुभः शस्त्र एकान्नविंशतिः ।
एका सतोबृहत्येका सयाज्ये द्विपदा तथा[2] ॥
बृहत्यो ऽनुष्टुभां त्रिंशत्साष्टा सचतुरक्षरा ।
सवने ऽनुष्टुभां संपच्छतानि त्रीणि पञ्च च ॥
ज्ञेयानि दशभिः सार्धमक्षराणि च षोडश ।
स्यान्मरुत्वादैश्वदेवादाग्नेयदादिव्यपदादि तु ॥
जगत्यो ऽत्र नव ज्ञेयाश्चत्वारिंशच्च त्रिष्टुभः ।
अभूदेव इति त्रिष्टुबेवमन्यस्याप्यविश्रुता[3] ॥
संपदानुष्टुभो होता अष्टाषष्टिः सहार्धेन ।
वैश्वदेवादि संख्याय परीक्ष्या[4] साग्निमारुतम् ॥
त्रिष्टुभो विंशतिस्तत्र जगत्यश्चैकविंशतिः ।
षट् गायत्र्यो ऽष्टयस्तिस्रो द्विपदाश्चैकविंशतिः ॥
संपन्नानामशीतिः षट्विंशत्यक्षरसंयुता ।
एकत्रिंशज्जगत्यः स्युः सयाज्ये साग्निमारुते ॥

१ A मुख्यास्था D ०मुख्या स्थामुख्या स्थाश्च० । २ C नव ।
३ A ०विर्श्रुता C ०विश्रुता । ४ C D पराख्या ।

यासे राके सुमतय एषोपजगती स्मृता।
त्रिष्टुभो ऽष्टादश ज्ञेयास्तिस्रश्चाचरपङ्क्तयः॥
विराजः षट् च गायत्र्यस्तिस्रः स्युः संपदा त्विह।
अनुष्टुभां त्र्यशीतिः स्यादधिकाष्टाभिरचरैः॥
अंघोर्वाकादि अंश्वन्तं अंयुः स्युः(?) स्यादिहोत्तरः।
सिनीवाली च राका च क्रियेयातां न चेदिह॥
गायत्र्यौ द्वे जगत्येका शक्वर्यौ द्वे तथैव च।
उपत्रिष्टुप् च विज्ञेयाथं यज्ञ इतीयमृक्॥
त्रिष्टुभो ऽष्टौ तु संपन्नाः स्युः षोडशभिरचरैः।
अधिका दशभिः सार्धं सदा ज्ञेया अनुष्टुभः॥
सवने ऽनुष्टुभां संपच्छतान्यर्धतृतीयानि।
द्वे चैवानापरे ज्ञेये चतुरचरवर्जिते॥
यासे राके जगती वा ज्ञेया त्रिष्टुबथापि वा।
एवं संपादिता संपद्युक्ता ब्राह्मणकल्पयोः॥

७. उपप्रयन्तो नव स हि यो मानुषा युगेति चतस्रः कस्त उपः इति तिस्रो यावयद्वेषसं त्वेति चतस्रो ऽश्विना यज्वरीरिष इति तिस्र आ मे हवं नयेति।

८. अग्निं नरो दीधितिभिररण्योरिति तृचमाग्नेये। प्रति ष्या सूनरी जनीत्युषस्ये। आ शुभ्रा यातमश्विना स्वश्वेत्याश्विने।

६. आपो रेवतीः क्षयथा हि वस्व इति त्रिः षसस्य यद्दिगुता सम्मिश्नूधनिति पञ्चागन्म महेति तिस्र उषो रुरुचे षट् प्रति स्तोमेभिरिति तृचं। आ भात्यग्निरुषसामनीकमिति द्वे उप त्या

वक्षो गमतो विशं न इति द्वे इति चतुर्विंशतिं त्रिष्टुभो ऽनुब्रूयात्।

१० वेदिषद इति सप्त अनस्य गोपा इति षट् एता उ त्या इति तिस्रः चित्रिश्चो श्रवेति चतस्रः क स्विदद्य कतमास्वश्विनेति चतस्र इत्येताश्चतुर्विंशतिं जगतीरनुब्रूयात्।

११. एना वो अग्निं नमसेति त्रयः प्रगाथाः। अयमग्निः सुवीर्यस्येति त्रयः प्रगाथाः। प्रत्यु अदर्श्यायतीति त्रयः प्रगाथाः। उषो यदद्य भानुनेत्येकः प्रगाथः। इमा उ वां दिविष्टय इति त्रयः प्रगाथाः। अयं वां मधुमत्तम इति द्वौ प्रगाथौ। एतान्यष्टादश प्रगाथाननुब्रूयात्।

१२. त्वामग्ने मनीषिण इति तिस्रः। अग्ने यजिष्ठो अध्वर इति तिस्रः। ईळिष्वा हि प्रतीव्यमिति द्व्यृचाः पुरु त्वा दाश्वान्वोच इति तिस्रः। उपस्तुभिवमा भरेति तिस्रः। युञ्जाथ यू रथं ऊव इति तिस्रः। तथा च श्लोकः।

त्वामग्ने मनीषिण इत्युष्णिहो मधमसृचः।
इत्येपदेशात् कर्तव्यास्तिस्र उष्णिह आश्विने॥

१३. सर्वाश्चेत्र भवन्ति। संख्यार्थं वचनं। सह त्रिर्वचनेनैकचिंशत्यङ्कयः।

१४. यः पूर्वमुक्तः प्रातरनुवाको द्वात्रिंशतं गायत्र्य इत्येवमादिः सो ऽनुष्टुभां द्वे शते पञ्चदशाधिके संपद्यते। तत्संपत्त्योः श्लोकाः।

द्वात्रिंशदेव गायत्र्यः पङ्क्तिराश्वत्थैव च।
भवन्त्यनुष्टुभस्त्रिंशत्संपद्यास्ता यथा श्रुतिः॥

चतुर्विंशतिं त्रिष्टुभो जगत्यश्च तथैव याः[1]।
अनुष्टुभो ऽपि संपन्ना ऊनसप्ततिरेव ताः॥
पृथक्कृत्य प्रगाथेभ्यो बृहत्यो दश पञ्च च।
ताः सप्तदश संपन्नाश्चतुरक्षरवर्जिताः॥
य उक्ताः परिसंख्याय हृताः पञ्चदशौष्णिहः।
त्रिंशच्च च संपन्ना अधिकद्वादशाक्षराः॥
सतोबृहत्यः पञ्चदशैकत्रिंशच्च पङ्क्तयः।
*प्रति या बृहती तिस्रो द्वादशाक्षरमौष्णिहम्॥*
अनुष्टुभस्तु संपन्नाः षष्टिरेताः समासतः।
चतुरक्षरमत्येति तत् क्षिपेत् बृहतीगणे॥

इति समाप्ता संपत्। ननु सिद्धैवाचैतावत्यनुष्टुप्संपत्। उच्यते। ज्ञापयत्याचार्यो जपानामत्र नोद्धारो न संपत्। तथा च वृद्धश्लोकाः।

या प्रातरनुवाकस्य संपत् सिद्धैव चोदिता।
जपास्तेन न संख्येयाः संपदुद्धारयोरिह॥
यस्मात्पिश्नोत्तरेता वै जपमन्त्राणि चोक्तवान्।
आप्यायनादयस्ते न कल्पे जपधर्मिणः॥
अतद्भवो ऽपि तद्धर्मा प्रायश्चित्तश्रुतिर्यतः।
वाक्यभेदादनित्यत्वाच्चतुर्थत्वादथापि च॥
यावभेदो ऽर्धर्चः शङ्को यदत्तदङ्गवेदिदम्।
इति स्यात् तत्र सोमार्थं विकल्पतो[2] यतः स्मृतौ॥
यदद्य होतृवर्याय इत्यमन्वारभामहे।

---

१ C. over the line च instead of य। २ C D विकल्पेते।

दद्माप ऋचस्तिस्रो दधिक्राव्णो अकारिषम् ॥
समुद्रं वो नि वर्तध्वं नेताख्याज्या अनुष्टुभः।
जपत्वात्करणत्वाच्च तथानुद्रवणादपि ॥

१५. स्तोकीयानां तृतीयाचतुर्थ्यावनुष्टुभौ। ते उद्धृत्याभि प्रवन्त समनेव योषा इत्येते द्वे प्रयोक्तव्ये।

१६. अच्छा नः शीरशोचिषमित्येतास्तिस्रो ऽच्छा वो अग्निमवस इत्येतासां तिसृणां स्थाने।

१७. प्रति श्रुताय वो धृषदित्येतास्तिस्रः। प्रत्यस्मै पिपीषत इत्येतासां तिसृणामनुष्टुभां स्थाने।

अक्षाअक्षा इदित्येषा गणोद्धारो ह्यनुष्टुभाम्।
तेनैतासामिति प्रायः सूत्रमेतद्विचोदितम् ॥

---

## १२.

१. तदेतत्पृष्ठं दशमायाह्ने न संपादयेत्साद्रियेताचैव संपन्नमिति (२७. २) श्रुतेः।

२. त्रिष्वपि वचनेषु उष्णिगुदेतीति सेनिमन्द्रे (२७. १)। गायत्री वेति श्रुतावुक्तं। तद्विहाय्ययाज्यासंबन्धेन पूर्वाचार्योक्तं लिख्यते श्लोकैः।

अग्निं नरस्तृचे चोष्णा शुभेति ह्यचे तथा।
श्लोचिये चानुरूपे च षट्सु चैवाग्निमारुते ॥
एकं चाज्यस्य याज्यायां निष्केवल्यस्य चापरम्।
राया हिरण्ययेत्यस्यां पादयोरक्षरद्वयम् ॥

सुते अध्वर इत्यर्धा त्रिरुक्तावचरद्वयम्।
अभूदेव इत्युभये अधिके द्वे तथाक्षरे ॥
अक्षरे अधिके अन्ये स्यातामक्षरपङ्क्तिषु।
पादयोरधिके चान्ये अया वाजं रथा इव ॥
आ नो यज्ञाय पादे ऽस्मिन्नेकं चाधिकमक्षरम्।
ऋतुयाजेषु चत्वार्यक्षराण्यधिकानि तु ॥
उष्णिक्त्वा कलशेत्येषोदिता तद्वद्धिकाक्षरा[1]।
ऋतुयाजेषु[2] चत्वार्या नो यज्ञाय चापरम् ॥
एतानि नातिरिच्यन्ते शाकलानामियं मतः।
तेषामेतेन गायत्री उदिता अक्षराधिका ॥
तां प्रातरनुवाके वै यथमात्संपदं विदुः।
अनुष्टुबपि न त्याज्या या पञ्चस्यच षट्पदा ॥
श्रुतेर्यस्माच्च विहिता सूत्रे ऽनुष्टुप् चतुष्पदा ॥

३. सह सारस्वतेनेति कृत्स्नार्थं आरम्भः।

४. पूर्वोक्तस्य विकल्पार्थं वचनं। आरम्भसामर्थ्यात् गायत्र्य इति वचनमस्मिन्पक्षे संपदनुष्टुभामिति ज्ञापनार्थं।

संपदर्थे च कर्तव्ये गण्या नाच पुरोरुचः।
प्रकृतौ या श्रुता संख्यासंख्या सा चेह चोदिता ॥
त्याज्या सारस्वते संख्या गायत्रीणामयं भवेत्।
पुरोरुचो ऽपि नैवात्र गण्याः सूत्रमिदं तथा ॥

---

१ A नध्यधिकाक्षरा C लेपो—orig नद्यक्षराधि॰, in marg. नृ द्य D उष्णिक्त्वा कलशे लेपोदिता नद्यक्षराधिका। २ C हु instead of षु।

५. मृजानो वारे पवमानो अव्यय इत्येवं यावन्तः स्तोत्रे यथाकाम्यं। यथाकामत्वेनेत्यर्थः[1]।

६. उत्तिष्ठताव पश्यतेत्येतस्याः स्थाने उत्तिष्ठन्नोजसा सहे-त्येतामभिष्टुयात्।

७. त्रिकद्रुकशब्दो यस्यां विद्यते सा त्रिकद्रुकीया। त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्म इत्येषा मरुत्वतीयस्य शस्त्रस्य प्रतिपद् भवति।

८. त्रिकद्रुकीयायां चत्वारः षोडशाक्षराः पादाः[2]। तत्रैकेन पादेन षोडशाक्षरावधिना[3] विग्रहणं। द्वितीयेन प्रणवः तृतीयेनावधानं। चतुर्थेन प्रणव इति शस्त्रम्।

९. तुविशुष्म तुविक्रतो इत्येते त्रिकद्रुकीयाया उत्तरे भवतः।

१०. इन्द्रायेन्द्राय गायत प्र व इन्द्राय वृहत इत्येतौ जनिष्ठा-उग्रीयात् सूक्तात् पूर्वौ प्रगाथौ पिन्वन्त्यपीयया संशंसति। समित्येकीभावे। एकीभावश्चाहावेनाव्यवच्छेदः। तत्र एतदुक्तं भवति। पिन्वन्त्यपीयायामाहावं कृत्वा ततः सूक्ते करोति। इति मरुत्वतीयमिति नियमार्थम्। ततः सत्यामसत्यां वा संपदि सर्वत्रैवं भवति। त्रिष्टुप्शस्त्रे ऽपि।

११. निष्केवल्ये ऽयं संशंसनक्रमः। वामदेव्यस्य स्तोत्रियानुरूपौ मस्त्वा कया नश्चित्र आ भुवत्कया त्वं न ऊत्येत्येतौ धाय्यां च तत्र

ऊर्ध्वं धाय्याया राथन्तरं प्रगाथं पिबा सुतस्य रसिन इत्येतं स्तोत्रियानुरूपौ च राथन्तरौ शंसेत्[1]।

१२. राथन्तरादनुरूपादनन्तरम्।

१३. आ धूर्ष्वस्मै दधाताश्वान् वज्रमेको बिभर्ति हस्त आहितमित्येते द्विपदे शंसेत्। चकारः समुच्चयार्थः।

१४. इन्द्रस्य नु वीर्याणीत्येतत्।

१५. धाय्यानन्तरो यः प्रगाथ उभासामाहावं कृत्वा हैरण्यस्तूपीयादौ करोतीत्यर्थः।

१६. इति यदेतदुक्तं। एवं नियमतो निष्केवल्यं भवति। यद्यपि स्वयोनौ रथन्तरक्रिया तद्यपि सखाय आ शिषामहीत्येता नव भवन्त्येव द्विपदे च। त्रिष्टुब्रराज्ये। तत्र हि संपदसंभवात्[2] अभाव आशङ्क्येत। तत्संपन्नमिति श्रुतेरथैव स्यात्।

१७. अभि त्वं देवमित्येवमादिकौ।

१८. अयं चापरो विशेषः। एकपातिनीनामुपर्याहावं[3] कृत्वा पुरस्ताद्धानोभद्रीयाग्रक्रीयं शंसेत्। एतावानैन्द्रदेवे विकारः। विकारवचनं संपन्ने विकल्पनिवृत्त्यर्थम्।

१९. उरु विष्णो वि क्रमस्वेत्येतां घृतयाज्यामुद्धृत्य भवा मित्रो न शेव्यो घृतासुतिरित्येतया यजति।

२०. अग्निं नरो दीधितिभिररण्योरित्यग्निष्टोमसाम्न आग्निमारुते स्तोत्रियानुरूपौ।

---

१ C D om. शंसेत्। २ C D संपदां। ३ C धाय्यानामुपर्याहावं D om. this passage.

यज्ञायज्ञीययोर्नित्य विकल्पेनाच ग्रस्यते।
संपत्तत्रान्यथा गच्छा छ्हत्य:[1] संभवे तथा॥

२१. अतिरिक्तोक्थमिदानीमुच्यते। आयं गौ: पृश्निरक्रमीदित्ययं स्तोत्रियः। मही द्यौः पृथिवी च न इत्यनुरूपः।

२२. तं प्रत्नथा पूर्वथा विश्वथेमथेत्येषा चयोदश ग्रस्ला।

२३. [2]यज्ञो बभूव स आ बभूवेत्यनया परिधाय तेनैव स्वरेण।

२४. प्रजापते न त्वदेतान्यन्य इत्येतया यजति।

२५. चतुराहावा होचका होता चातिरिक्तोक्थेष्विति। तत उक्थैर्व्याख्यातस्तेषूक्थ इत्यर्थः।

२६. इति यदेतदुक्तमेतत्समूह्य ऽतिरिक्तोक्थं भवति। अतिरिक्तोक्थवचनाद्याज संपदः कार्याः। उत्तरमप्यतिरिक्तोक्थमेषाविशेषात्।

२७. प्राक् पत्नीसंयाजेभ्यः। संस्थिते दशमे ऽहनि पुरा पत्नीसंयाजेभ्य इति श्रुतेः। संस्थाप्य वा पत्नीसंयाजान्। संस्थितेषु वा पत्नीसंयाजेष्विति श्रुतेः। गार्हपत्ये हुत्वा गो ऽमिहतो गार्हपत्ये प्राजापत्ये द्वे आहुती जुहोतीति श्रुतेः। अन्वारम्भेष्विह रतिरिति जुहोतीति कात्यायनश्च। पूर्वया द्वारा सदः प्रपद्य नियमतः स्वस्य धिष्ण्यस्य एकेकः पश्चादुपविशेत्। ब्रह्मा तु स्वदेशे एव धिष्ण्यवचनात्। मानसेन स्तुत इति वचनं स्तोत्रप्रसवे मानसो व्यापार इत्यस्य

---

1 C (in marg.) ल: instead of त्य। 2 This Sūtra is in the text edition erroneously counted as No. 22. It ought to be No. 23 and the following Sūtras numbered accordingly.

भावार्थम्। आयं गौरित्येतास्तिस्र ऋचः सार्पराज्ञीरित्येवं संज्ञिता। पराङ् अनाहत्या। निर्वचनरहिता उपांश्वप्रणवन्। आहेति वाक्यशेषः।

१८. मानसेन स्तुते ग्रोमावो इत्यनेनैवाध्वर्योरामन्त्रणम्। आहावप्रकरणे[1] शस्त्रादावित्यतिरिक्तवचनात् ततश्च सार्पराज्ञीप्रशंसनादनन्तरमध्वर्यो इत्यामन्त्रितो ऽध्वर्युर्होता वा गृहपतिना वा होतः होतरिति प्रतिगृणोति। प्रत्याभावं सर्वत्र करोति। सर्वत्रग्रहणाद्यथान्यायं[2] होतः गृहपत इति गृहपतेः।

१९. ओ होतरित्येकस्मिन्नवसाने[3] तथा होतरित्यपरस्मिन्नेवं वक्ष्यमाणमर्थमाचक्षाणे होतरि गृहपतौ चाध्वर्युरनुगृणाति। गृणन्तमर्थविशेषानुस्वरन्तमनुकूलयतीत्यर्थः।

---

१४.

१. दशहोता नाम यज्ञस्तत्र वदिष्यस्त्वेवमामन्त्रयेत्। स चैवकमत्र कर्मणि। पृथगप्येतस्मात्कर्मणः। चरकश्रुतेः। यः प्रजाकामः स्यात्तो ऽरण्यं प्रतिपरेत्य ब्रह्माणं दक्षिणत उपवेश्य दशहोतारं निगदेत्। अयजमानस्यापि श्रौतःशेषास्याम्नवचने यद्बल्लतिगरदयदर्शनादत्र समविच्छेदा इष्यन्ते। तान् पूर्वाचार्योक्तानतुब्रूमः।

२. एतावानयमेकान्नविंशत्यक्षरो विच्छेदः।

३. एकान्नविंशतिरक्षराण्ययं विच्छेदः।

४. इतिशब्देनानन्तरं निर्दिश्यते। उक्तेति संकीर्तनविनाश आवृत्त्यर्थं। अथोर्याश्चित्यथशब्दादनन्तरमुपांश्वनुद्रवेत्।

---

1 C D आहाव॰। 2 C D om. च। 3 C D चोमित्येक॰।

१८. त्रयोदशाक्षरो ऽयं विच्छेदः।

१९. एकादशाक्षरो ऽयं विच्छेदः।

२०. त्रयोदशाक्षरो ऽयं विच्छेदः।

२१. पञ्चदशाक्षरो ऽयं विच्छेदः।

२२. सप्तविंशत्यक्षरो ऽयं विच्छेदः।

२३. परिसमाप्तं पूर्वसुक्तम्।

---

१६.

१. अनुगरार्थमामन्त्र्य वक्ष्यमाणमुपन्यस्यति। पञ्चहोतारं वदिष्यन्निति[1]।

२. अष्टादशाक्षरो ऽयं विच्छेदः[2]।

३. विंशत्यक्षरो ऽयं विच्छेदः।

४. प्राग्व्याख्यातम्।

५. चतुरक्षरो ऽयं विच्छेदः।

६. पञ्चाक्षरो ऽयं विच्छेदः।

७. त्र्यक्षरो ऽयं विच्छेदः।

८. अष्टाक्षरो ऽयं विच्छेदः।

९. षडक्षरो ऽयं विच्छेदः।

१०. चतुरक्षरो ऽयं विच्छेदः।

११. चतुर्दशाक्षरो ऽयं विच्छेदः।

१२. द्वादशाक्षरो ऽयं विच्छेदः।

१३. प्राग्व्याख्यातम्।

---

१ D om. the Comm. on this Sūtra. २ CD अयं विच्छेदः om. in this Sūtra.

१४. अष्टादशाक्षरो ऽयं विच्छेदः।

१५. त्रयोदशाक्षरो ऽयं विच्छेदः।

१६. द्वादशाक्षरो ऽयं विच्छेदः।

१७. पञ्चविंशत्यक्षरो ऽयं विच्छेदः।

१८. परिसमाप्तं पूर्वसूक्तम्।

---

## १७.

१. अध्वर्यो३ इत्यनुगरायेमामगव्य पङ्क्तीतरि व्याख्यातव्य इत्यर्थः।

२. चतुर्दशाक्षरो ऽयं विच्छेदः।

३. अष्टादशाक्षरो ऽयं विच्छेदः।

४. पूर्ववद्व्याख्यानम्।

५. पञ्चाक्षरो ऽयं विच्छेदः।

६. चतुरक्षरो ऽयं विच्छेदः।

७. षळक्षरो ऽयं विच्छेदः।

८. पञ्चाक्षरो ऽयं विच्छेदः।

९. त्र्यक्षरो ऽयं विच्छेदः।

१०. षळक्षरो ऽयं विच्छेदः।

११. पञ्चाक्षरो ऽयं विच्छेदः।

१२. चतुरक्षरो ऽयं विच्छेदः।

१३. षोळशाक्षरो ऽयं विच्छेदः।

१४. पञ्चदशाक्षरो ऽयं विच्छेदः।

१५. कृतव्याख्यानमेतत्।

१६. एकादशाक्षरो ऽयं विच्छेदः।

१७. त्रयोदशाक्षरो ऽयं विच्छेदः।

१८. त्रयोदशाक्षरो ऽयं विच्छेदः।

१९. सप्तविंशत्यक्षराण्ययं विच्छेदः।

२०. एतावत्पूर्वोक्तम्।

---

## १८.

१. सप्तहोतरि विषयभूते वदिष्यन्नध्वर्युमामन्त्रयेत।

२. एकोनविंशत्यक्षराण्ययं विच्छेदः[1]।

३. विंशत्यक्षरो ऽयं विच्छेदः।

४. उक्तव्याख्यानम्।

५. षडक्षरो ऽयं विच्छेदः।

६. सप्ताक्षरो ऽयं विच्छेदः।

७. सप्ताक्षरो ऽयं विच्छेदः।

८. नवाक्षरो ऽयं विच्छेदः।

९. त्रयोदशाक्षरो ऽयं विच्छेदः।

१०. षडक्षरो ऽयं विच्छेदः।

११. पञ्चाक्षरो ऽयं विच्छेदः।

१२. चतुरक्षरो ऽयं विच्छेदः।

१३. चतुर्दशाक्षरो ऽयं विच्छेदः।

१४. अष्टाक्षरो ऽयं विच्छेदः।

१५. त्रयोदशाक्षरो ऽयं विच्छेदः।

---

१ O D ॰क्षरो ऽयं।

१६. सप्तदशाक्षरो ऽयं विच्छेदः।

१७. पूर्वोक्तं उपांशु ब्रूयात्।

१८. अष्टाक्षरो ऽयं विच्छेदः।

१९. द्वादशाक्षरो ऽयं विच्छेदः।



२०. अष्टाक्षरो ऽयं विच्छेदः।

२१. त्रयोदशाक्षरो ऽयं विच्छेदः।

२२. द्वादशाक्षरो ऽयं विच्छेदः।

२३. चतुर्दशाक्षरो ऽयं विच्छेदः।

२४. त्रयोविंशत्यक्षरो ऽयं विच्छेदः।

२५. षट्त्रिंशदक्षरो ऽयं विच्छेदः।

२६. भागुक्तं यत्।

---

१९.

१. वक्ष्यमाणिकास्तम्बः। अतो वदति। प्रजापतेः अत्यचं तम्यसा होता वदेदिति श्रुतेः। अतो वदतीत्यतःशब्द आनन्तर्ये। ततो नान्तरा यागः। अतो ऽन्ये वापि कामं यजेयुरिति श्रुतौ विकल्पो[1] न सूचितः। उपरिष्टादुपदेशात्।

२. अध्वर्यो इत्येको ऽवच्छेदो द्वितीयः शेषेण। एवमुत्तरास्वपि द्रष्टव्यं। उत्तमा तु त्र्यवसाना[2]।

१४. [3]परिसमाप्तास्त्वः।

---

१ Omitted in D and (orig.) in C.   २ A ins. त्व।

३ There is no commentary on Sūtra 3-13.

१७. त्रयोदशाक्षरो ऽयं विच्छेदः।

१८. त्रयोदशाक्षरो ऽयं विच्छेदः।

१९. सप्तविंशत्यक्षराण्ययं विच्छेदः।

२०. एतावत्पूर्वोक्तम्।

---

१८.

१. सप्तहोतरि विषयभूते वदिष्यन्नध्वर्युमामन्त्रयेत।

२. एकोनविंशत्यक्षराण्ययं विच्छेदः[1]।

३. विंशत्यक्षरो ऽयं विच्छेदः।

४. उक्तव्याख्यानम्।

५. दशाक्षरो ऽयं विच्छेदः।

६. सप्ताक्षरो ऽयं विच्छेदः।

७. सप्ताक्षरो ऽयं विच्छेदः।

८. नवाक्षरो ऽयं विच्छेदः।

९. त्रयोदशाक्षरो ऽयं विच्छेदः।

१०. दशाक्षरो ऽयं विच्छेदः।

११. पञ्चाक्षरो ऽयं विच्छेदः।

१२. चतुरक्षरो ऽयं विच्छेदः।

१३. चतुर्दशाक्षरो ऽयं विच्छेदः।

१४. अष्टाक्षरो ऽयं मिच्छेदः।

१५. त्रयोदशाक्षरो ऽयं विच्छेदः।

---

१ C D ॰क्षरो ऽयं।

१६. षष्टदशाक्षरो ऽयं विच्छेदः।

१७. पूर्वोक्तं उपांशु ब्रूयात्।

१८. अष्टाक्षरो ऽयं विच्छेदः।

१९. द्वादशाक्षरो ऽयं विच्छेदः।

२०. अष्टाक्षरो ऽयं विच्छेदः।

२१. त्रयोदशाक्षरो ऽयं विच्छेदः।

२२. द्वादशाक्षरो ऽयं विच्छेदः।

२३. चतुर्दशाक्षरो ऽयं विच्छेदः।

२४. त्रयोविंशत्यक्षरो ऽयं विच्छेदः।

२५. षट्विंशदक्षरो ऽयं विच्छेदः।

२६. [1]प्रागुक्तं यत्।

---

१९.

१. वक्ष्यमाणिकास्तम्भः। अतो वदन्ति। प्रजापतेः सत्यवं तन्वसा होता वदेदिति श्रुतेः। अतो वदतीत्यतःशब्द आनन्तर्ये। ततो नान्तरा यागः। अतो ऽन्ये वापि कामं यजेयुरिति श्रुतौ विकल्पो[2] न सूचितः। उपरिष्टादुपदेशात्।

२. अध्वर्यौ इत्येको ऽवच्छेदो द्वितीयः शेषेण। एवमुत्तरास्वपि द्रष्टव्यं। उत्तमा तु अवसाना[3]।

१४. परिसमाप्तास्तन्त्वः।

---

[1] Omitted in D and (orig.) in C.   [2] A ins. तु।

[3] There is no commentary on Sūtra 3-13.

## २०.

१. वक्ष्यति गृहपतिसप्तदशाः सत्त्रमासीरन्निति । श्रुत्यन्तरे दीक्षाकर्मविधौ तेषां गृहपतिः प्रथमो दीक्षित[1] इति । स गृहपतिः सत्त्रभृते दाशरात्रे तन्नूवदनात्मनन्तरं वदति । असत्त्रभृते त्वेकएक[2] एव यजमानः । सो ऽपि गृहपतिरित्युच्यते । गृहपतिवदनं वक्ष्यमाणकम् ।

२. अध्वर्यो इत्येको विच्छेदः । येषां वै गृहपतिर्गृहपतिं विद्वान् गृहपतिर्भवतीति द्वितीयो विच्छेदः ।

३. तृतीयो विच्छेदः ।

४. चतुर्थो विच्छेदः ।

५. गृहपतिवदनस्य पञ्चमो विच्छेदः ।

६. षष्ठो विच्छेदः ।

७. सप्तमो विच्छेदः ।

८. अष्टमो विच्छेदः ।

९. समाप्तं गृहपतिवदनम् ।

---

## २१.

१. प्रजापते न त्वदेतान्यन्य इति मनसा यजति ।

२. उच्चैस्तरामित्यस्य प्रतिषेधार्थं मनसा वषट्करोतीति वचनम् ।

३. प्रसिद्धम् ।

४. यदं गृह्णाति प्राजापत्यं वायुं पृथिव्या पात्रेण ग्रहणसादनस्तोत्रोपाकरणहोमभक्षाहरणभक्षणानि मनसेति कात्यायनस्य[3] ।

---

१ A दीक्षते । २ O D त्वेकमू एव । ३ १२. ५. १९ ।

५. तार्तीयसवनिक एव भक्षमन्त्रः। प्रकरणात्।

६. औदुम्बरीं यजमाना अन्वारभन्ते। सात्त्विके द्वादशाहे[1] ऋत्विज इति तस्मिन् अग्रेण धिष्ण्यान्परीत्यासीनाः। सामर्थ्यात्।

७. अपरेण धिष्ण्यान् ये नातिक्रामेयुस्ते ऽप्यासीनाः पलाशशाखाभिः स्पृशेयुः।

८. तेषां स्पृशतामुत्तमौ हस्तौ होता कुर्यात्।

९. अनेन कामेन। इति मनसा संकल्पयेदित्यर्थः[2]।

१०. अपिधाय सदसो द्वारावित्यस्मिन्नवधौ पत्न्यो ऽपि शालायामासते। शालायास्वेति वचनात्। अते वागुपाकरणे वाग्यमनं नेत्रसंमीलनं च।

११. नक्षत्रेषु दृश्यमानेषु सत्सु मार्जालीयदेशे स्थिताः। तच्चक्षुर्देवहितं शुक्रमुच्चरदित्यनयर्चा नक्षत्रेषु विषयभूतेषु यजमानाश्चक्षुर्विसृजन्ते। सूर्ये चक्षुर्विसर्गः शतातिरात्रे नक्षत्रासंभवात्। सौर्यलादा[3] मन्त्रस्य।

१२. ते ऽपरया द्वारा हविर्धाने प्रपद्यन्ते। अथाध्वर्युरुत्तरस्य हविर्धानस्य कूबरीमभिपद्याह सत्रस्यर्धिं गायेति गायति सत्रस्यर्धिं तत्सत्रस्यर्धिमाप्नुवन्ति सर्वे साम्नो निधनमुपयन्तीति (२६.२) श्रुतेः। उत्तरस्य हविर्धानस्याधोऽक्षं यजमानाः सर्पन्ति।

१३. उत्तरेणागारं यज्ञस्यानुसंचरन्त इति श्रुतेः।

१४. युवं तमिन्द्रापर्वता पुरोयुधेत्येतामतिच्छन्दसं जपन्तो ऽधोऽक्षं सर्पन्ति। उत्तरेण वा गच्छन्तो ऽक्षवेलायां तदुद्देश

---

[1] C in marg. यजमाना। [2] C D have only अनेन कामेन। [3] A सूर्यादा।

इत्यर्थः । ततो ऽग्रेण हविर्धाने समुपविश्य । संशब्दादेकप्रदेश आसीनाः कामान्ध्यायन्ते यत्कामाः सत्रिणः ।

१५. ये बहुकामाः सत्रिणो ऽनेककामाः पृथक्कामा इत्यर्थः । भूर्भुवः स्वरित्येतास्ते व्याहृतीर्न तु प्रतीकग्रहणात् सुप्रजा इत्येवमादिकं मन्त्रम्[1] ।

१६. ते यजन्तो यजमानास्ते वा ऋत्विजः सत्त्रे । शाखान्तरोपदेशात् । ते प्राञ्च उदञ्च उत्क्रम्य वाचं विसृजन्ते विस्पष्टमुच्चैरास्थन्त इत्यर्थः । कथम् । वागैतु वागुपैतु वागुप मैतु वागिति ।

१७. सुब्रह्मण्याप्रतीकं सुब्रह्मण्योमिति[2] त्रिरुपांशूक्त्वा वाचं विसृजन्ते ये पूर्वं वाग्यताः ।

१८. केचिन्मानसमहरन्तरं[3] वदन्ति । केचिदुदयनीयान्ते । अपरे दशमाहरङ्गं । तदभिप्रायं सूत्रमेतत् । तन्निराकरणायेदमारभ्यते ऽनन्तरं सूत्रम् ।

१९. कालवाद एषः । यो ऽयं पुरा पत्नीसंयाजेभ्यः संस्थाप्य वेति (१०.१२.२७) । यथा दिवि देवमादीनामभिषेचनीयमध्ये पठितानामपि नाभिषेचनीयाङ्गत्वं । कालमात्रवादो ऽस्मिन्नवधौ । पष्ठौहीं दीव्यति राजन्यं जिनातीत्येवमाद्यो ऽभिषेचनीयमध्ये ऽपि क्रियमाणा राजसूयाङ्गं एवं सत्रोत्थानं दशमे ऽहनि क्रियमाणं द्वादशाहाङ्गमिति । अतो वाशब्दः पराभिप्रायनिवृत्त्यर्थः ।

इति शाङ्खायनश्रौतसूत्रभाष्ये दशमो ऽध्यायः समाप्तः ।

---

१ C D ०द्विकं मन्त्रः । २ C D सुब्रह्मण्याम् । ३ A मानसमहरन्तरं (२?) C (orig.) मानसहरन्तर; alt. by marg. add. of र to मानसमहरन्त० D मानसमहन्तरं ।

# अथ एकादशोऽध्यायः ।

१.

भाष्यकारगिरां यत्र विनष्टं लेखनादिना ।
अक्षरं तद्दासशर्मा[1] मुञ्जसूनुरकल्पयत् ॥

शाङ्खायनसूत्रोक्त[स्य] एकादशाध्यायस्य भाष्यं लिख्यते[2] । व्याख्यातो ऽग्निष्टोमः प्रकृतिर्द्वादशाहस्यैकाहानां चेति सूचितत्वात् पूर्वकाविशेषांश्च द्वादशाहः सत्रमहीनश्चेत्युभयरूपस्यापि द्वादशाहस्य श्रुत्यन्तरात् धर्मान् विधाय यथाप्राप्ते च हौत्रयाजमाने[3] । अथेदानीं स्वश्रुतिक्रमेण चतुर्विंशादीन्यहानि वक्तव्यानि । तेषां च श्रुतौ हौत्रमेवोक्तं । न होत्रकाः । पुनश्च पृथक्प्रकरणे होत्रकाणां कर्मविधिः । तेनैव न्यायेन द्वादशाहःशेषं परिभाषां चोक्त्वा प्रक्रमते ततो भगवान् सुयज्ञः सूत्रकारः ।

१. सत्राहीनानामन्ये ऽपि द्वादशाहाः सन्त्येव तदर्थं व्याख्यात इति विशेषणं । न्यायप्राप्तं चैतत् । बहुनो धर्मजातस्य विधानादयमेव प्रकृतिः सत्राहीनानां युज्यते ।

२. स्तोत्रियानुरूपौ तृतीये ऽहनीत्येवमादिकं वचनं । लक्षणं च स्तोत्रिया होत्रकाणां प्रातःसवने समधच्छ्याकाः । एवमादिको वचनलक्षणो विधिः । सो ऽस्यैव द्वादशाहस्य विशेषः सकलीकरणत्वेन वेदितव्यः । शाखान्तरीयस्य मध्याशयेत् एतां वेत्येवमादि ।

---

१ D मुञ्ज॰ । २ A om. from शा॰ to लिख्यते ।
३ B (sec. h.) याज॰ A C D यज॰ ।

३. द्विरात्रप्रभृतयः अहीना इत्युच्यन्ते । एकोत्तरास्तु याजन इति प्रतिषेधार्थं पृथगभिधास्यन्ते ।

४. न तु प्राक् द्वादशाहाध्यायः ।

५. उभयतोऽतिरात्रं सत्रमुपरिष्टादहीनस्येति तन्त्रान्तरम् ।

६. अहीनेषु न विद्यन्ते ।

---

२.

१. चतुर्विंशस्तोममित्येवमादिः स्वमतपरिग्रहः । चतुर्विंशमित्याचक्षत इति संज्ञार्थम् ।

२. होताजनिष्ट चेतन इत्यष्टर्चमाज्यमिति (१९. ८) श्रुतेः ।

३. सह सारस्वतेन तृचेन ।

४. आ त्वा रथं यथोतय इत्येवमाद्यनुक्रम्य श्रुतत्वात् ।

५. अनुत्तमा ते मघवन्नकिर्नित्येषा परिधानीया कर्तव्या । न स्वकर्मेषा किं तर्हि उत्तरा या एकस्य चिन्मे विभ्वस्त्वोज इत्येवमाद्याः षट् पूर्वाः शस्त्वा यत्रास्मिन् धीयते निवित् । अन्यत्रापि यत्र यत्रैतस्मिन्निविद्धानं भवति तत्र तत्रायं धर्मः ।

६. तदिदास भुवनेषु ज्येष्ठमिति बृहद्दिवो निष्केवल्यमिति श्रुतेः ।

७. तद्देवस्य ते हि द्यावापृथिवी इति ।

८. द्वितीयादेव पार्ष्ठिकात् यज्ञस्य वो वृष्णे शर्धाय ।

९. किमु श्रेष्ठ इति ।

१०. वैश्वानराय धिषणामृतावृध इति ।

११. यज्ञेन वर्धत जातवेदसमिति जातवेदसीयं भवति।

१२. चतुर्विंशे ऽन्यत्र वा यो विशेषस्तं वक्ष्याम इति वाक्यशेषः। अनारभ्यवादश्चायं। तथापि च्छन्दोगानामस्मिन्नहनि प्रायेण पाठादिहैवोच्यते।

१३. यज्ञा यज्ञा वो अग्नय इत्यचाछावं कृत्वा ततो ऽस्य स्तोत्रियानन्तरमेषू षु वयमु त्वामधा ह्यग्ने इत्येतानुरूप्यस्तोत्रियान् शंसेत् तत आहावः।

१४. उक्थ्यग्रहणमनुवर्तते यज्ञायज्ञियग्रहणं च।

१५. अग्ने मरुद्भिरित्येवमादिका कल्पना। आग्निमारुतोक्थ्यग्रहणदेवतालिङ्गा। एतां शस्त्वा तन्तुं तन्वन्नित्येतस्या अनन्तरमाहावमेकैकस्याश्चैकपातिन्या इति (८.७.८) वचनात्। ततो यथोक्तया परिदध्यादन्यथा।

१६. यद्यात्तदक्थ्यो ऽप्यनारभ्यवाद एव। तत्रायं विशेषः। अग्ने मरुद्भिरेकाभिरित्येतयैव यथोक्तस्थानगतया यजेत्। एतामेव याज्यां कुर्यादित्यर्थः। स्तोत्रियानुरूपप्रतिषेधार्थमेतयेत्यतिरिक्तवचनम्।

---

## ३.

१. एकत्रिको ऽप्यनारभ्यवाद एव। तत्रायं विशेषः। दृचकृप्तं शस्त्रं वक्ष्यमाणेन विधिना।

२. यथाश्रुतमिति च्छन्दोगापेक्षा। तदपेक्षया स्तोत्रिया-

स्कस्त्वा । तृचान्ता सकलां योनिमित्यर्थः । शस्त्वेतिवचनादविशेषेण होतुर्होत्रकाणां चायमुपदेशः ।

३. यादृक्सङ्ख्याका स्तोत्रियास्तादृक्सङ्ख्याकाननुरूपान् कुर्यात् । अहर्गणे तु तृचानेव । तायमानरूपत्वात् ।

४. क्रमार्थं वचनम् ।

५. पर्यासा इत्यन्त्यानां सूक्तानामाख्यां वक्ष्यति । तेषामुत्तमान् तृचान् होत्रकाः शंसन्ति ।

६. उत्तमानेव तृचान् होता शंसति । उत्सृज्यन्ते पर्यास्यानि. सूक्तानि महासूक्तेषु ।

७. उक्ताद्यदन्यत्तत्सर्वं प्रकृत्या भवति । तद्यथा । प्रतिपदनुचरेन्द्रनिहवब्राह्मणस्पत्यैकपातिनीधाय्यापरोष्णिहीयादेवपत्नीराकासरपङ्क्तीवैश्वामित्रीस्वादुष्किलीया इति ।

---

४.

१. वक्ष्यमाणः प्लवो ऽभिप्लवाख्यः पृष्ठ्यविकारो भवति । ततस्तृतीये ऽहनि सावित्रवैश्वानरीये षष्ठे चार्भवं सिद्धं भवति ।

२. यानि पार्थिकस्य प्रथमस्य त्र्यहस्याज्यानि धामूल्हिके पक्षे तानि पूर्वेषामाभिप्लविकानां चतुर्णां यथासङ्ख्येन भवन्ति ।

३. प्रथमे ऽहनि रथन्तरं द्वितीये बृहत्तृतीये रथन्तरमित्यनेन क्रमेण विपर्यासमेते पृष्ठे भवतः ।

४. ज्योतिःसंज्ञकमग्निष्टोमसंस्थं प्रथममहर्भवत्युत्तमं च षष्ठम्[1] ।

---

१ A षष्ठम् ।

५. प्रथमोत्तमयोरह्नोर्मध्ये चत्वार्युक्थ्यसंस्थानि वक्ष्यमाणसंज्ञकानि भवन्ति ।

६. गां द्वितीयमहरुपयन्ति । गां चतुर्थमहरुपयन्तीति श्रुतेः ।

७. आयुस्तृतीयमहरुपयन्ति । आयुः पञ्चममहरुपयन्तीति (२०.४.२१.२) श्रुतेः ।

८. इन्द्रो रथाय प्रवतं कृणोतीति मरुत्वतीयमिति श्रुतेः ।

९. आ याह्यर्वाङुप वन्धुरेष्ठा इति निष्केवल्यमिति श्रुतेः ।

१० कथा देवानां कतमस्य यामनीति वैश्वदेवम् । अत्र पञ्चमे चाहनि ।

११. मारुतं सूक्तमेकमुत्वाहादग्निष्टोमाद्भवति ।

१२. प्रति प्र होता व्रतमस्य माययेति जातवेदसीयं भवति ।

१३. यदिह नोक्तं तत्पार्ष्ठिकेन प्रथमेनाह्ना समानम् ।

---

५.

१. इमां उ त्वा पुरुतमस्य कारोरित्येतन्मरुत्वतीयं द्वितीयस्याभिप्लविकस्य भवति ।

२. सुत इत्त्वं निमिश्ल इन्द्र सोम इति निष्केवल्यमिति श्रुतेः ।

३. अभूद्देवः सविता वन्द्यो नु न इति सावित्रमुद्ददिति श्रुतेः ।

४. ततं मे अपस्तदु तायते पुनरित्यार्भवमित्युद्ददिति (२०. ३) श्रुतेः ।

५. ततं म इत्येतदेवार्भवं पञ्चमे चाभिप्लविकेऽहनि । लाघवार्थमिहोक्तम् ।

६. देवान्हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवमुददिति (१०. ३) श्रुतेः। विषुवति चेति नोक्तमसंमोहार्थम् ।

७. यज्ञेन वर्धत जातवेदसमिति जातवेदसीयमिति (१०. ३) श्रुतेः।

८. यदिह नोक्तं तद्द्वितीयादह्नः पार्ष्ठिकात् ग्रहीतव्यं। तथा च गां द्वितीयमहरुपयन्तीत्यत आरभ्य सर्वमेवाम्नातम् ।

---

६.

१. वक्ष्यमाणकः[1] प्रउग श्रौष्णिहो वैश्वमनस इत्येवंसंज्ञकस्तृतीयस्याभिप्लविकस्याह्नो भवति। तथैव श्रुतत्वात्। स उच्यते।

२. वायो याहि शिवा दिव इति तृचो वायव्यः।

३. आ वां सहस्रं हरय इत्यैन्द्रवायवः।

४. ता वां विश्वस्य गोपेति मैत्रावरुणः।

५. आ वां वाहिष्ठो अश्विनेत्याश्विनः।

६. इत्यैन्द्रस्तृचः।

७. इति वैश्वदेवस्तृचः।

८. उत नः प्रिया प्रियास्विति सारस्वतस्तृचः।

९. वायो याहि शिवेत्येवमादीनि सप्त यान्युक्तानि।

१०. तिष्ठा हरी रथ आयुज्यमानेति मरुत्वतीयमिति श्रुतेः।

११. इन्द्रस्य नु वीर्याणि प्र वोचमित्येतत्।

---

१ C D om. क।

१२. एतेन द्यावापृथिवी अभीद्धते इति द्यावापृथिवीयं द्वचं लिङ्गात् श्रुतेश्च।

१३. एतेन द्यावापृथिवी इत्येतदेव षष्ठे षाभिप्लविके[1] द्यावापृथिवीयं प्रमाणादिह्नोक्तम्।

१४. एकाहाग्निष्टोमादाग्नेयं तत्र रयं सुष्टुतं विधानाय इति। वैश्वदेवं था नो भद्राः क्रतवो यन्तु विश्वत इति।

१५. आ रुद्रास इन्द्रवन्तः सजोषस इति मारुतमिति श्रुतेः।

१६. *तामग्ने चतायवः समीधिर इति आग्नेयमिति* श्रुतेः।

१७. एवं विशिष्टमाग्निमारुतम्।

---

७.

१. होताजमिह चेतन इत्येतदाज्यं चतुर्थस्याह्नः आभिप्लविकस्य भवति।

२. मैधातिथ इत्येवंसंज्ञः प्रउगो भवति। नामधेयविज्ञानमपि फलाय।

३. ये गार्त्समदे प्रउगे वायव्यैन्द्रवायवे ते अत्रापि भवतः। कियांस्तु विशेषः। तत्र गार्त्समदः पूर्वा मैधातिथ्य उत्तराः। तद्यथा। वायो ये ते सहस्रिण इति द्वे तीव्राः सोमास आ गहीत्येका शुक्रस्यासेत्येकोभा देवा दिविस्पृशेति द्वे (१०.३.५)।

---

[1] A ०प्लविके C D ०वने।

६. देवान्हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवमुदादिति (२०. ३) श्रुतेः। विषुवति चेति गोतमसंमोहार्थम्।

७. यज्ञेन वर्धत जातवेदसमिति जातवेदसीयमिति (२०. ३) श्रुतेः।

८. यदिह नोक्तं तद्द्वितीयादह्नः षाष्ठिकात् ग्रहीतव्यं। तथा च गां द्वितीयमहरुपयन्तीत्यत आरभ्य सर्वमेवाम्नातम्।

---

## ६.

१. वक्ष्यमाणकः[1] प्रउग आग्निष्टोमे वैश्वमनस इत्येवंसंज्ञकस्तूनी-यस्याभिप्लविकस्याह्नो भवति। तथैव श्रुतत्वात्। स उच्यते।

२. वायो याहि शिवा दिव इति तृचो वायव्यः।

३. आ वां सहस्रं हरय इत्यैन्द्रवायवः।

४. ता वां विश्वस्य गोपेति मैत्रावरुणः।

५. आ वां वाहिष्ठो अश्विनेत्याश्विनः।

६. इत्यैन्द्रस्तृचः।

७. इति वैश्वदेवस्तृचः।

८. उत नः प्रिया प्रियास्विति सारस्वतस्तृचः।

९. वायो याहि शिवेत्येवमादीनि सप्त यान्युक्तानि।

१०. तिष्ठा हरी रथ आयुज्यमानेति मरुत्वतीयमिति श्रुतेः।

११. इन्द्रस्य नु वीर्याणि प्र वोचमित्येतत्।

---

[1] C D om. क।

१२. यो जात एव प्रथमो मनस्वानिति निष्केवल्यं भवति।

१३. द्वितीयात्प्रार्षिकात्स्वाविचं तद्देवस्येत्येतत्।

१४. ऋभुक्षस्त्व इन्द्रवन्तो अग्रय इति वैश्वदेवं भवति।

१५. वैश्वानराय धिषणामृतावृध इति वैश्वानरीयं। यानि चाद्यस्य पूर्वस्य वैश्वानरीयाणीत्येवमादिवचनात्। धारावरा मरुतो धृष्ण्वोजस इति मारुतम्। त्वमग्ने द्युभिस्त्वमाशुशुक्षणिरिति जातवेदसीयम्। इत्याग्निमारुतम्। एतावता विकारेणाग्निमारुतं षष्ठे आभिप्लविके।

१६. इन्द्र इषे मघवन् त्वावदिद्भुज इति वैश्वदेवं भवति षष्ठस्याह्न आभिप्लविकस्य द्वितीये ऽभिप्लवप्रयोगे।

१७. उपासानक्ता बृहती सुपेशसेति वैश्वदेवं षष्ठे आभिप्लविके तृतीये[1] ऽभिप्लवाभ्यासे।

१८. अग्निरिन्द्रो वरुणो मित्रो अर्यमेति वैश्वदेवं षष्ठे आभिप्लविके चतुर्थे ऽभिप्लवाभ्यासे।

१९. शं न इन्द्राग्नी भवतामवोभिरित्येतद्वा वैश्वदेवं भवति षष्ठे आभिप्लविके चतुर्थे ऽभिप्लवाभ्यासे। ननु क्वायमभिप्लवाभ्यासो यत्रैतानि वैश्वदेवान्यन्वायात्यन्ते। उच्यते। शुक्लपक्षमासांश्चतुरो ऽभिप्लवानुपयन्तीति समास इति वक्ष्यति गवामयने (१२.१९.९)। तत्रैतानि वैश्वदेवान्यन्वायात्यन्त इति।

२०. अग्निरिन्द्र इति चतुर्थे शं न इन्द्राग्नी इति वेत्येतयोर्वा व्यवस्थितो विकल्पः। प्रथममग्निरिन्द्र इत्येतत्पूर्वस्मिन्पटले। प्राग्विषु-

१ C D omit वैश्वदेवं षष्ठे आभिप्लविके।

मत इत्यर्थः। द्वितीयं यं न इन्द्राग्नी इत्येतदुत्तरे पटले। ऊर्ध्वं विषुवत इत्यर्थः।

२१. परावतो ये दिधिषन्त आप्यमिति वैश्वदेवमाभिप्लविकस्य षडहस्याह्नः पञ्चमे ऽभिप्लवप्रयोगे। पृष्ठ्यस्याभिप्लवःस्थाने तदभिप्लवायनमित्यचाचकार: (१३.१८.२०)।

---

१०.

१. पृष्ठ्याभिप्लवयोरनन्तरं श्रुतिक्रमेणाभिजितमाह। अभिजिन्नामैकाहः। सर्वस्तोमस्त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवचयस्त्रिंशेषु सर्वशब्दो ऽयं। उभयसामा बृहद्रथन्तरसामेत्यर्थः। प्रत्यक्षं पृष्ठं बृहद्रथन्तरं पृष्ठं वास्य भवति संस्थया चाग्निष्टोमः। पूर्वकारिणामाधन्तमपि यदेतदुक्तं स्वमतप्रकाशनार्थम्।

२. प्र वो देवायाग्नय इति सूक्तं। यदाहिष्ठं तदग्नय इति तृचमित्येतदाज्यं भवति।

३. माधुच्छन्दसस्य गार्त्समदस्य द्वौ प्रउगौ संप्रवयेदिति।

४. प्रंसनक्रमो ऽयं। तथैव श्रुतिः। वायव्यां पुरोरुचं शस्त्वोभे वायव्ये तृचे इत्येवमाद्याह।

५. माधुच्छन्दस एव प्रउगे सति गार्त्समदं वैश्वदेवमुपरिष्टान्माधुच्छन्दसस्य वैश्वदेवस्य पर्याहरेदित्युक्त्वाय माधुच्छन्दसं सारस्वतमिति प्रयक्रमः श्रुतेः।

६. ऐकाहिकं च यथोक्तं वा। ऐकाहिकं प्रातःसवनं स्यादिति सा स्थितिरिति श्रुतेः। होतुरेव प्रकरणात्।

७. माध्यन्दिने सवने ऽयं विशेषः। ऐकाहिकं जनिष्ठाउग्रीयं शस्त्वा ततस्तस्योर्ध्वमिन्द्र पिब तुभ्यं सुतो मदायेति शंसेत्।

८. ऐकाहिकादूर्ध्वमित्यनुवर्तते।

९. रुहत्पृष्ठपक्षे ऽभिजिति। इन्द्र पिब तुभ्यमित्यस्योर्ध्वं जनिष्ठाउग्रीयं। या त ऊतिरित्यस्योर्ध्वं हैरण्यस्तूपीयम्।

१०. एकसूक्ते वा निष्केवल्यमरुत्वतीये भवतः। तस्मिन्पक्षे पिबा सोममभि यमुग्र तर्द इति मरुत्वतीयं शुद्धमेव। तथा नमु ष्टुहि यो अभिभूत्योजा इति निष्केवल्यं। पूर्वस्य पिबा सोममभि यमुग्र तर्द इत्येतस्योत्तमामनुसृजति द्विपदेति कृत्वा अया वाजमिति।

११. मारुतादग्निष्टोमात्। अथ नित्यमेवैकाहिकं तृतीयसवनं स्यादिति या क्षितिरिति श्रुतेः।

---

११.

१. अभिजितो ऽनन्तरं श्रुतिपाठक्रमेण स्वरसामानो ऽवसरप्राप्ता उच्यन्ते। अप्तद्यस्तोमा इति स्तोमातिशंसनार्थं। स्वरसामान इति नामधेयं शास्त्रसंव्यवहारार्थं। एवं स्वरसाम्नां (१०. ९. ११) ते छन्दोमेषु (५) स्वरसामस्विवेवमादौ।

२. एवमेव श्रुतत्वात्।

३. स्वरसंज्ञानि पृष्ठान्येषामिति स्वरपृष्ठाः कौषीतकेर्भगवतो मतेन। स्वराणि त्वेव पृष्ठानि कुर्वीरिति ह स्माह कौषीतकिरिति (२४. ८) श्रुतेः।

४. त्रयाणामपि[1] स्तरपाणां यथानिर्दिष्टे दृहद्रथन्तरे पव-मानेषु गीयेते। न पृष्ठमाने[2]। तथापि योन्यनुशंसनं यथोपदिष्टं भवति। स्वमतोपदेशार्थं वचनम्।

५. अग्निष्टोमा इति येऽज्ञं ब्रह्मवर्चस्विनो[3] भवन्ति ये अग्नि-ष्टोमातुपयन्तीति श्रुतेः।

६. उक्थ्याः स्युरिति च स्माह कौषीतकिरित्येवमादि श्रियो विराजो ऽन्नाद्यस्योपाप्त्या इति (२४.८) श्रुतत्वात्।

७. आ यस्मिंस्त्वे मध्ये इति प्रथमस्य स्तरपाव आग्यमावद्राथ-न्तरं दृहदयो हि भागव इति द्वितीयस्य दृहदार्हतमग्न ओजिष्ठमा भरेति तृतीयस्यावद्राथन्तरमिति (२४.५) श्रुतेः।

८. यथोक्तानामाग्यानामेकैकस्योत्तमां योत्तमां चेत्युत्तमाः परिहाप्य शंसनं सर्वत्र।

९. माधुच्छन्दसः प्रथमस्य स्तरपावः प्रजगो गार्त्समदो द्विती-यस्यौष्णिह आत्रेयस्तृतीयस्येति (२४.५) श्रुतेः।

१०. क ई वीरः को अपश्यदिन्द्रमिति प्रथमस्य स्तरपावो मरुत्वतीयं कोति ककुत्कया शुभा सवयसः सनीळा इति द्वितीयस्य कयेति ककुत् गायत्साम नभन्यं यथा वेरिति तृतीयस्य ता कर्मा-षतरास्मा इति कर्मेति ककुदिति श्रुतेः (२४.५)।

११. एकस्यैव साम्प्रगाथस्यात्ययेऽपेचं बहुवचनं। प्राकृतसाम-प्रगाथशंसनादनन्तरं वक्ष्यमाणकान् ककुभः प्रगाथसंज्ञकान् प्रगाथान् शंसेत्।

---

१ A त्रयाणामपि [illegible] स्तरपाणा॰। २ D पृष्ठमाने। ३ A ॰वर्चस्विनो।

१२. कं नव्यो अतसीनामिति कद्वान्प्रगाथ इति प्रथमे श्रुतत्वात्। तथा कद्रू नवस्याकृतमिति कद्वान् प्रगाथ इति द्वितीये श्रुतत्वात्। तथा इमा उ त्वा पुरूवसो इति प्रगाथः पावकवर्णाः कवर्णा इति कद्वानिति तृतीये स्वरसाम्नि (१४.७) श्रुतत्वात्। कद्वत्प्रगाथादनन्तरं इहतस्य योनिं शंसेत्।

१३. यस्ते साधिष्ठो ऽवस इत्येतत्सूक्तमुत्तमामृचं परिहाप्यार्धर्चशं विग्रहारं त उपेति च प्रथमे स्वरसाम्नि शंसेत्।

१४. गायन्ति त्वा गायत्रिणो ऽप्रावित उदु नश्चित्तम इति आनुष्टुभत्रैष्टुभे[1] द्वितीये स्वरसाम्नि।

१५. इन्द्रं विश्वा अवीवृधन् सं च त्वे जग्मुर्गिर इन्द्र पूर्वीरित्यानुष्टुभत्रैष्टुभे तृतीये स्वरसाम्नि निष्केवल्यसूक्ते भवतः।

१६. यो ऽयमुक्तो विधिरित्येष इहद्रथन्तरपृष्ठानां स्वरसाम्नो भवति नोत्तरः।

१७. यथायथा अपूर्व्यतैव श्रोत्रियः स्वरपृष्ठानां। स्वरपृष्ठाः कौषीतकेरिति ■ उक्ताः स्वरसामानस्तेषां त्र्यणामप्यविशेषेण।

१८. द्वे अनुष्टुभौ तृतीया इहती।

१९. वाशब्दो विकल्पार्थः। पूर्वोक्तेन वह द्वितीयस्य स्वरसाम्नो मत्स्यपायि ते मह इति वा श्रोत्रियो भवति। एतास्त्वेव प्रथमां इहतीं तृतीयां करोति। द्वितीयतृतीये अनुष्टुभौ शस्त्वा।

२०. मतिं न इत्यादिके द्वे अनुष्टुभौ। वयं घ त्वा सुतावन्त इति इहती[2] तृतीयात्तुरूपस्य कार्या।

---

१ C D चानुष्टुभे। २ A om. बृहती।

२१. प्रत्यस्मा इत्येवमादिके द्वे अनुष्टुभौ शस्त्वा तृतीयामुत्सृज्य ततो अस्मा अस्मा इदन्धस इति बृहतीं तृतीयां करोति। एष स्तोत्रियस्तृतीयस्य स्वरसाम्नो ऽनुरूपश्च वक्ष्यमाणो यज्ञायज्ञा इत्येवमादिना सह विकल्पो ऽर्थात्।

२२. इममिन्द्र सुतं पिबेति द्वे अनुष्टुभौ। न इं वेद सुते सचेति बृहती तृतीयानुरूपस्य कार्या।

---

## १२.

१. आदिबृहतीको मध्यबृहतीको ऽन्तबृहतीको वा यतोबृहतीकः स्तोत्रियस्ततोबृहतीक एवानुरूपो ऽपि कर्तव्यः।

२. धाय्यानन्तरं त्रिष्वपि स्वरसामसु कद्वतो यथोक्तान् शंसेत्। ततो रथन्तरस्य योनिं प्रथमे बृहतो द्वितीये बृहद्रथन्तरयोस्तृतीये।

३. [1]यत्र यत्रोभयोपदेशस्तत्रतत्र पूर्वं रथन्तरस्य शंसेत् ततो बृहतः।

४. योन्यनुशंसनानन्तरं यमिन्द्र दधिषे त्वमिति तृचः प्रथमे स्वरसाम्नि। स्वरन्ति त्वा सुते नर इति तृचो द्वितीये स्वरसाम्नि। दाना मृगो न वारण इति तृच एव तृतीये स्वरसाम्नि। तथैव श्रुतत्वात्।

५. इन्द्र तुभ्यमित्येवमादीनां नवानामृचां प्रत्यहं तिस्रस्तिस्र ऋचः शंसेत्। पूर्वाणि च सूक्तानि। तद्यथा। यस्ते साधिष्ठ इति

1 C D insert धाय्यानन्तरं त्रिष्वपि स्वरसाम (!) कद्वतः।

प्रथमे। गायन्ति त्वा गायत्रिण इति द्वितीये। इन्द्रं विश्वा इति तृतीये।

६. इन्द्र तुभ्यमित्येवमादीनि तृचानि न वा शंसेत्। कथं कुर्यात्। तृचानन्तरमुभयानि सूक्तानि शंसेत्। तद्यथा। यस्ते साधिष्ठ इत्युत्तमां परिधाप्यावीयधमिति च प्रथमे। गायन्ति त्वापादित उदु नश्चित्तम इति द्वितीये। इन्द्रं विश्वाः सं च नो जग्मुरिति तृतीय इति।

७. अयमेव शंसनक्रमः स्वरयोनिषु बृहद्रथन्तरयोश्छन्दोगैः प्रापितयोः।

८. एकस्मिन्पक्षे प्रागानुष्टुभात् अपरस्मिन्पक्षे प्राक् तृचात् यदुक्तं तत्प्रगाथेन संशंसति। नान्तराह्वयत इत्यर्थः।

९. प्रथमात् त्र्यहात्पार्ष्ठिकाद्यथासङ्ख्यं तृतीयसवनानि बृहद्रथन्तरपृष्ठानां स्वरसाम्नां भवन्ति।

१० स्वरपृष्ठानां[1] स्वरसाम्नां पृष्ठ्यस्य षडहस्य समूळ्हस्य याः पूर्वस्य त्र्यहस्य वैश्वदेवानां प्रतिपदस्ताः प्रतिपदो भवन्ति।

११. स्वरयोनीनां च[2] स्वरसाम्नामेवं प्रतिपदः।

१२. यान्युत्तरस्य त्र्यहस्य तृतीयसवनानि तानि तृतीयसवनानि सानुचराणीति (२४.८) श्रुतेः।

१३. तुशब्दो मध्यमात्त्र्यहादित्यस्य विशेषणार्थः। तत्र यानि वैश्वदेवानि प्रस्तान्युक्तानि तेषामुत्तमानि सूक्तान्युद्धृत्य। स्वस्ति नो मिमीतामिति [illegible] तिस्रो ऽन्ते वैश्वदेवानां करोतीति

1 C D om. स्वरपृष्ठानां। 2 C D om. स्वरयोनीनां च।

(१०.८.१०) यत्तु उक्थ्यं चोद्धृत्य प्र वः पान्तं रघुमन्यवो ऽन्ध इति प्रथमे स्वरसाम्नि वैश्वदेवं करोति। तं प्रत्नथा पूर्वथा विश्वथे-मथेति द्वितीये। कदित्था नॄँः पात्रं देवयतामिति तृतीये। तथानि तत्र वैश्वदेवानि भवन्ति (२४.९) इति प्रकृत्य श्रुतौ सर्वमाम्नातम्।

१४. वाशब्दो विकल्पार्थः। अग्निरिन्द्रो वरुणो मित्रो अर्यमेति वा[1] वैश्वदेवं प्रथमे स्वरसाम्नि भवति।

१५. प्रथम एव स्वरसामनि। यस्मिन्कल्पे ऽग्निरिन्द्रो वरुण इति वैश्वदेवं तस्मिन्नेव कल्पे प्र ये शुम्भन्ते जनयो न सप्तय इति मारुतं भवति।

१६. देवान्हुवे बृहच्छ्रवसः स्वस्तय इति द्वितीये स्वरसाम्नि वैश्वदेवं भवति।

१७. उषासानक्ता बृहती सुपेशसेति तृतीये स्वरसामनि वैश्वदेवं भवति। तदे खलु प्रत्यक्षं वैश्वदेवान्येवावधीयेरन्नित्येवमादि (२४.९) प्रकृत्य कल्पान्तरं श्रुतौ सर्वमाम्नातम्।

---

## १३.

१. स्वरसाम्नामनन्तरं श्रुतिपाठक्रमेण विषुवान् वक्तव्यः। तदर्थमेकविंशस्तोममिदमहर्देवपृष्ठं पञ्चे[2] महादिवाकीर्त्यं वा। अग्निष्टोमो विषुवानिति शास्त्रसंव्यवहारार्थं संज्ञाकरणम्।

---

१ OD om. वा     २ OD ॰पृष्ठपञ्चे।

२. नियमार्थमेतद्वचनं। पुरादित्यस्यास्तमयादेतदहः सम्पादयेयुरिति (२५. १०) श्रुतेः।

३. अस्मिन्नहनि उदित आदित्ये प्रातरनुवाकः कार्यः। सप्रातरनुवाकमेतदहर्दिवाकीर्त्यं भवति। सप्रातरनुवाकेन सपत्नीसंयाजेनैतेनाह्ना पुरादित्यस्यास्तमयात्समीप्सेयुरिति (२५. १०) श्रुतेः।

४. महाराचे प्रातरनुवाको भवति। तदु ह स्माह कौषीतकिः प्रजापतिर्वै प्रातरनुवाको न तमस एव तद्यथायथमेव तमुपाकुर्यादिति (२५. १०) श्रुतेः।

५. यस्मिन्पक्षे उदिते प्रातरनुवाकस्तस्मिन्पक्षे अग्निं मन्ये ऽपि पितरमग्निमापिमित्येका प्रतिपद्भवति।

६. अस्मिन्नहनि प्रातरनुवाकस्य नियमत इमे सङ्ख्याविकल्पाः। शतं द्विशतं विंशतिशतं वेति। अनुब्रूयादिति प्रत्येकमभिसंबध्यते। वाशब्दस्य।

७. वसिष्ठेन दृष्टं वासिष्ठं। जुषस्व न इत्येतदाग्नेयसूक्तं भवति।

८. सूर्यदेवत्यः पशुः सवनीयस्य पशोरुपालम्भ्यो न प्रधानः उपशब्दात्।

९. चित्रं देवानामुदगादनीकमिति तिस्रो वपायाः पुरोडाशस्य पशोः पुरोनुवाक्या भवन्ति। तिस्र उत्तरा याज्या अनेनैव क्रमेण। सौर्यस्येति वचनान्नेतरस्य सावनस्य।

१०. सौर्यस्य पशोरुपांशु प्रदानं भवति। तथा च श्रुतिः।

ते वा एते चत्वार एव पशव उपांशु भवन्ति। सौर्यः सावित्रः प्राजापत्यो वाग्देवत्य (२५.१०) इति।

११. समुद्रादूर्मिर्मधुमाँ उदारदित्याज्यसूक्तं भवति।

१२. वक्ष्यमाणकः।

१३. प्रथमे वायव्यैन्द्रवायवे उत्तमं सारस्वतमिति मध्यमाच्छन्दोमात्। तथा चैव श्रुतिः। कुविदङ्ग नमसा ये वृधास इति वायव्यमत एवोत्तरं तृचमैन्द्रवायवमुत त्या नः सरस्वती जुषाणेति सारस्वतमिति।

१४. प्रथमाच्छन्दोमात्त्रीणि तृचानि भवन्ति। मैत्रावरुणमाश्विनमैन्द्रं। तथा चैव श्रुतं। उदां चक्षुर्वरुण सुप्रतीकमिति मैत्रावरुणम्। आ गोमता नासत्या रथेनेत्याश्विनम्। आ नो देव शवसा याहि शुष्मिन्नित्यैन्द्रमिति।

१५. आश्विने तयं विशेषः। क्रमणानां तृतीयामुत्कृष्य वि वेदुच्छन्त्यश्विना उषाश्च इति भानुमत्त्वती तृतीया कर्तव्या। तस्योर्ध्वं भानुं सविता देवो अश्रेदिति भानुमती तृतीयेति (२५.२) श्रुतेः।

१६. प्र शुक्रैतु सदनादृतस्येति वैश्वदेवमिति (२५.२) श्रुतेः।

१७. वाशब्दो विकल्पार्थः। अस्मिन्नहन्येकाहिकं[१] प्रातःसवनं भवति पूर्वाह्णं वा। तदाहुर्नैष्टुभं प्रातःसवनं स्यान्मोहयति क्लृप्तच्छन्दसो यज्ञमुखमैकाहिकमेव स्यादिति (२५.२) श्रुतेः।

१८. तस्य[२] प्र वो देवायाग्नये त्वं हि चेतवद्यश इत्येते उभे सदाज्यमिति (२५.२) श्रुतेः। तच्छब्दादयमितरः पक्षः।

१ C adds वा।  २ A om तस्य।

१६. तस्मिन्कल्पे माधुच्छन्दसश्च प्रउगो भवति। माधुच्छन्दसे[1] वेति पारस्वतस्य विकल्पः। एवमेतत्पञ्चयत्युक्तं प्रातःसवनमुक्तम्।

२०. कया शुभा सवयसः सनीळा इति मरुत्वतीयम्। त्यं सु मेषं महया स्वर्विदमिति आगतमिति श्रुतेः। अभिष्ठा उग्रः सहसे तुरायेत्येतस्मिंस्त्रिष्टुभे निविदं दधातीति श्रुतेः। ता वा उभय्यस्त्रिष्टुब्जगत्यः शस्यन्त इति (२५.३) च श्रुतत्वात्।

२१. आयन्त इव सूर्यमित्येष स्तोत्रियो भवति। वक्ष्यति। एकशतं निष्केवल्यमिति। तत्र तावदयमस्त्रयोनौ इहति गीयमाने आयन्तीयः स्तोत्रियो भवति। न चेत्स्त्रयोनौ आयन्त इव सूर्यमिति सूर्यवान् स्तोत्रिय इति (२५.१) श्रुतेः।

२२. यद् द्याव इन्द्र ते शतमित्यनुरूप इति श्रुतेः।

२३. अस्त्रयोनौ इहति[2] महादिवाकीर्त्यं वा वक्ष्यमाणकं पृष्ठं भवति[3]।

२४. चित्रं देवानामुदगादनीकमिति स्तोत्रियो महादिवाकीर्त्यस्य पृष्ठस्य।

२५. चित्रं देवानामित्यस्य तृचस्य ये उत्तरे ऋचौ[4] तंसूर्यस्तेत्येवमादिके ते चानुरूपार्थत्वेन शस्येते।

२६. उत्सूर्यो बृहदर्चींष्यश्रेदित्येषा तृतीयानुरूपस्य कर्तव्या।

२७. वण्महाँ असि सूर्येति स्तोत्रियः। उदु त्यद्दर्शतं वपुरित्यनुरूप इत्येतौ महादिवाकीर्त्यस्य स्तोत्रियानुरूपौ प्रगाथौ वा भवतः।

---

१ C see h. ॰ सो।     २ C D om. पृष्ठं भवति।

२ C D बृहत्म्; see h. वा इ॰।     ४ C D om. ऋचौ।

२८. विभ्राड् बृहत्पिबतु सोम्यं मध्विति स्तोत्रियस्तृचः। वि सूर्यो मध्ये अमुचद्रथं दिव इत्यनुरूपः। एतौ वा स्तोत्रियानुरूपौ महादिवाकीर्त्यस्य पक्षे भवतः।

२९. विभ्राडा त्वा सुमनसः सुचक्षस इत्यनुरूपो वि सूर्यो मध्य इत्यनेन सह विकल्पते।

३०. अस्तयोनौ बृहति महादिवाकीर्त्यपक्षे बण्महाँ असि सूर्येति सामप्रगाथो भवति।

३१. सामप्रगाथः पूर्वेण सह विकल्पते।

३२. स्तयोनिपक्षे बृहतः स्तोत्रियानुरूपौ शस्त्वा सामप्रगाथं च बार्हतं ततो रथन्तरस्य योनिं शंसेत्। बृहत आतानं शस्त्वा रथन्तरस्य योनिं शंसतीति (२५.५) श्रुतेः।

३३. अस्तयोनिबृहत्पृष्ठपक्षे[1] सामप्रगाथादनन्तरमुभयोर्बृहद्रथन्तरयोर्योनी शंसेत्[२]। अथ बृहद्रथन्तरयोर्योनी शंसतीति श्रुतेः।

३४. महादिवाकीर्त्यं पृष्ठं चेत् सामप्रगाथानन्तरं बृहद्रथन्तरयोर्द्वयोरपि साम्नोर्योनिं स्तोत्रियास्तोत्रिया होता शंसेत् महादिवाकीर्त्यपृष्ठपक्षं प्रस्तुत्यापि। अथ बृहद्रथन्तरयोर्योनिं शंसतीति श्रुतेः। तस्य च महादिवाकीर्त्यस्य[3] त्रयः पक्षाः। तद्धैके त्रिष्टुप्सु कुर्वन्ति तथा बृहतीषु स्यादिति हैक आहुः तथा जगतीषु स्यादिति त्वेव स्थितमिति पक्षत्रयं (२५.४) श्रुतेः।

---

१ U D om. बृहत्पृष्ठ। २ C D om. the text from अथ to Sūtra 34 शंसतीति श्रुतेः C10 marg. महादिवाकीर्त्ये च। विभ्रायस्तयोनौ बृहद्रथन्तरयोर्योनी ..श्रुतेः। ३ महादिवाकीर्त्यस्य om. C D.

१४.

१. यद्येते इन्द्रद्युम्नान्तरे माध्यन्दिने पवमाने सामगाः कुर्युः ततो योन्यनुशंसनम्।

२. अयमप्युद्धृतइन्द्रद्युम्नान्तरपक्षः। एवमेते षट् पक्षाः। अक्ष-योनिपक्ष एकः। महादिवाकीर्त्यपक्षास्त्रयः। अयोनिपक्ष एकः। उद्धृतइन्द्रद्युम्नान्तरपक्ष एकः। एते सूत्रकारेण सूचिताः। छन्दोग-वशात्तु बहवो ऽन्ये ऽपि संभाव्यन्ते। तदप्युक्तमेव[1] स्तोत्रिये छन्दो-गमित्यादि।

३. इन्द्रः किल सुत्या अस्य वेदेत्युक्थमुखीया। त्रिषु कल्पेषु अयोनौ अक्षयोनौ उद्धृतइन्द्रद्युम्नान्तरे च।

४. शं नो भव चक्षसा शं नो अह्नेति महादिवाकीर्त्यपक्षे द्व्यमुक्थमुखीया।

५. यौमे च इन्द्राभि भूम्यार्थे इति चयोदशकं सूक्तं त्रैष्टुभं अयोनौ इहति भवति।

६. य एक इद्धव्यश्चर्षणीनामित्यक्षयोनिपक्षे एकादशर्चं त्रैष्टुभं सूक्तम्।

७. य एक इद्धव्य इत्येतदेव सूक्तं भवति।

८. तमु ष्टुहि यो अभिभूत्योजा इत्येतत्सूक्तं त्रैष्टुभं पञ्चदशक-मुद्धृतइन्द्रद्युम्नान्तरपक्षे शंसेत्।

९. त्रैष्टुभादनन्तरमभि त्यं मेषं पुरुहूतमृग्मियमित्येतज्जागतं सूक्तं पञ्चदशर्चं शंसेत्।

---

१ C ०वाको०।

१०. ऋतुर्जनित्री तस्या अपस्परीत्येतस्य चर्योदृग्वर्चस्य नव शस्त्वा सर्वहरेर्वा प्र ते महे विदथे शंसिषं हरी इत्येतस्य चयोदृग्वर्चस्यैव पूर्वेण सह विकल्पितस्य नवैव शस्त्वा ततो निविदं शंसेत्।

११. आ सत्यो यातु मघवाँ ऋजीषीत्येकविंशतिमृचो निविद्धानानन्तरं शंसेत्।

१२. विश्वजिते धनजिते स्वर्जित इत्येतस्य षड्चस्य सूक्तस्योत्तमां परिहाप्य पञ्च शस्त्वा ततः।

१३. विश्वजित इत्यस्य पञ्चर्चस्यानन्तरमाहूय दूरोहणं रोहति। शंसनप्रकारमेवंसंज्ञकं करोति। तस्य स्वरूपमाह।

१४. हंसः शुचिषदसुरन्तरिक्षसदित्येतामृचं सप्त वाराञ्छंसेत् पच्छो ऽर्धर्चशस्त्रिपच्छो ऽवसानं चिपच्छो ऽर्धर्चशः पच्छ इति। अस्या दूरोहणसंज्ञा शास्त्रसंव्यवहारार्था।

१५. विश्वजित इत्यस्य या उत्तमा शिष्टा[1] तां दूरोहणानन्तरं शंसेत्।

१६. एष प्र पूर्वीरव तस्य चम्रिष इति आगतं वस्रचमिति (१५.७) श्रुतत्वात्।

१७. पतङ्गमक्तमसुरस्य माययेति तिस्र इति श्रुतेः।

१८. उरुं नो लोकमनु नेषि विद्वानिति त्रिःशस्तया परिधानीययेत्यादि (१५.८) श्रुतेः।

१९. इति यदेतदुक्तं पूर्वोक्तया रचनया निष्केवल्यमेतत्पैङ्ग्यं मतमिति पैङ्गी संपदिति (१५.७) श्रुतेः। संपदुपेतं च सूत्युक्तम्।

---

१ C D शिष्टं।

२०. अथशब्दो विशेषार्थः। सविशेषो ऽपि विधीयते।

२१. स्तोत्रियप्रभृति सर्वेषु पक्षेषु पूर्वोक्तेन तुल्यमोक्थमुखीयायाः।

२२. य उद्धृतश्छन्दस्यन्तरपक्षस्तस्मिन् चतुर्जनिचीयं त्रयोदशर्चं शंसेत्।

२३. चतुर्जनिचीयस्यैव एकादश शंसेत्। स्वयोनौ हृदयञ्च।

२४. चतुर्जनिचीयस्य नव शंसेत्। अन्यच पूर्वोक्ताभ्याम्।

२५. सख्येन दुष्टं साध्यं। अभि त्वं मेषमित्येतदुद्धृत्येन्द्र याहि हरिभिरिति पञ्चदश शंसेत्।

२६. प्र ते महे विदथे ऋषिर्नाभा सूक्तं। ऋषिर्वसुः। तस्यै-कादश[1] शस्त्वा निविदं दध्यात्।

२७. अभूरेको रयिपते रयीणामिति त्रैष्टुभं पञ्चर्चमेव प्र पूर्वीरित्येतस्य साध्यस्य स्थाने।

२८. त्यमू षु वाजिनं देवजूतमिति तार्क्ष्यः। पतङ्गमक्तमसुरस्य माययेत्येतस्मात्पूर्वः शस्यः।

२९. एकाधिकं शतं निष्केवल्यं पैङ्ग्यमतेन कौषीतकिमतेन च श्रुतिरेव सूचीकृता।

३०. प्रथमादह्नः पार्ष्ठिकात्सावित्रं। युञ्जते मन उतेत्येतत्।

३१. द्वितीयात्पार्ष्ठिकाद्द्यावापृथिवीयं भवति। ते हि द्यावापृथिवी इत्येतत्।

---

१ A मह इत्येतस्य नवसूक्ते०।

१०. स्तुतर्जनिवो नरा अपसरीत्येतस्य यथोद्दर्चस्य नव शस्त्वा सर्वंवरेवा प्र ते महे विदथे शंसिषं हरी इत्येतस्य यथोद्दर्चस्यैव पूर्वेण सह विकल्पितस्य नवैव शस्त्वा ततो निविदं शंसेत्।

११. आ सत्यो यातु मघवाँ ऋजीषीत्येकविंशतिमृचो निविद्धानामन्तरं शंसेत्।

१२. विश्वजिते धनजिते स्वर्जिते इत्येतस्य षट्कस्य सूक्तस्योत्तमां परिहाप्य पञ्च शस्त्वा ततः।

१३. विश्वजित इत्यस्य पञ्चर्चस्यानन्तरमाहूय दूरोहणं रोहति। शंसनप्रकारमेवंसंज्ञकं करोति। तस्य स्वरूपमाह।

१४. हंसः शुचिषदसुरन्तरिक्षसदित्येतामृचं सप्त वाराञ्छंसेत् पच्छो ऽर्धर्चशस्त्रिपच्छो ऽनवानं त्रिपच्छो ऽर्धर्चशः पच्छ इति। अस्या दूरोहणसंज्ञा शास्त्रसंव्यवहारार्था।

१५. विश्वजित इत्यस्य या उत्तमा शिष्टा[1] तां दूरोहणानन्तरं शंसेत्।

१६. एष प्र पूर्वीरव तस्य चम्रिष इति आगतं पञ्चमिति (२५.७) श्रुतत्वात्।

१७. पतङ्गमक्तमसुरस्य माययेति तिस्र इति श्रुतेः।

१८. उरुं नो लोकमनु नेषि विद्वानिति त्रिःशस्तया परिधानीयेत्यादि (२५.८) श्रुतेः।

१९. इति यदेतदुक्तं पूर्वोक्तया रचनया निष्केवल्यमेतत्पैङ्ग्यं मतमिति पैङ्गी संपदिति (२५.७) श्रुतेः। संपदुपेतं च श्रुत्युक्तम्।

[1] O D शिष्टो।

२०. अथशब्दो विशेषार्थः। सविशेषो ऽपि विधीयते।

२१. स्तोत्रियप्रभृति सर्वेषु पक्षेषु पूर्वोक्तेन तुल्यमोक्थमुखीयायाः।

२२. य उद्धृतरक्षदूथस्तरपक्षस्मिन् चतुर्जनिवीयं चयोदशर्चं शंसेत्।

२३. चतुर्जनिवीयस्यैव एकादश शंसेत्। स्वयोनौ वदथथ।

२४. चतुर्जनिवीयस्य नव शंसेत्। अन्यच पूर्वाभ्याम्।

२५. सर्वेण दृष्टं सार्ध्यं। अभि त्यं मेषमित्येतदुद्धृत्यैन्द्र याहि हरिभिरिति पञ्चदश शंसेत्।

२६. प्र ते महे विदथे चापिर्नाम सूक्तं। चापिर्वदः। तस्यैकादशं गत्वा निविदं दध्यात्।

२७. अभूरेको रयिपते रयीणामिति चैष्टुभं पञ्चर्चेनैव प्र पूर्वीरित्येतस्य वाक्यस्य स्थाने।

२८. त्यमू षु वाजिनं देवजूतमिति तार्क्ष्यः। पतङ्गममानसुरस्य मायथेत्येतस्मात्पूर्वः शसः।

२९. एकाधिकं शतं निष्केवल्यं पैङ्ग्यमतेन कौषीतकिमतेन च श्रुतिरेव सूचीकृता।

३०. प्रथमादह्नः पार्ष्ठिकात्साविचं। युञ्जते मन उतेत्येतत्।

३१. द्वितीयात्पार्ष्ठिकाद्द्यावापृथिवीयं भवति। ते हि द्यावापृथिवी इत्येतत्।

---

१ A सह इत्येवस्य वषट्कृत्यै०।

२२. षष्ठात्पार्ष्ठिकादार्भवमारुते भवतः। किमु श्रेष्ठ इत्यार्भवं प्रयज्यव इति मारुतम्।

२३. देवान् हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवं भवति।

२४. तृतीयात्पार्ष्ठिकाद्वैश्वानरीयं चाग्नं। वैश्वानराय धिषणामृतावृध इत्येतत्।

२५. मूर्धानं दिवो अरतिं पृथिव्या इत्यग्निष्टोमसाम्नः स्तोत्रियः। मूर्धा दिवो नाभिरग्निः पृथिव्या इत्यनुरूपः।

२६. वेदिषदे प्रियधामाय सुद्युत इति जातवेदसीयं भवति।

२७. गवामयनप्रयोगे विषुवतो ऽनन्तरमावृत्ताः स्वरसामानः कार्याः। यस्तृतीयः स प्रथमो यो द्वितीयः स मध्यमो यः प्रथमः स तृतीय इत्येवमावृत्ताः। अथ त्रीन् स्वरसाम्न आवृत्तानुपयन्तीति (२५. १०) श्रुतेः।

---

## १५.

१. विश्वजित्संज्ञक एकाहः। सर्वस्तोमस्त्रिवृदादिभिस्त्रयस्त्रिंशान्तैः स्तोमैर्युक्तः। सर्वपृष्ठो रथन्तरादिभिः पृष्ठैः रैवतान्तैर्युक्तः। बृहत्पृष्ठो वा विकल्पेन। अग्निष्टोमः। यथोद्ग्रं वा एतं मासमाप्नुवन्ति यद्विश्वजितमुपयन्तीति प्रक्रम्य (२५. ११) श्रुतौ सर्वमाख्यातम्।

२. तस्याग्निं नरो दीधितिभिररण्योरिति वैराजमाज्यमिति श्रुतेः।

३. तं हि चैतवद्यश इत्येतदाज्यं भवति। बृहत्पृष्ठस्य विश्व-

जितः। अग्निं नर इत्येतत्स्वसंयोगविहितं[1] परोक्षपृष्ठादिषु भवति। बृहद्रथन्तरपृष्ठस्य यदि बृहत्प्रत्यक्षं ततस्त्वं हि चैतवदित्येतदाज्यम्।

४. सत्र सारस्वतेन भवति। सूत्रारम्भात्।

५. सतुर्विंशादन्यो माध्यन्दिनो भवति। माध्यन्दिनशब्देन निष्केवल्यमरुत्वतीये उच्येते।

६. वैराजस्य साम्नो यौ स्तोत्रियानुरूपौ सन्यूङ्खावुक्तौ तौ तथैव प्रस्तर सर्वपृष्ठे विश्वजिति नेतरस्मिन् तनूपृष्ठे ब्राह्मणाच्छंसिनो ऽपि स्तोत्रियत्वविशेषात्[2]। सन्यूङ्खवैराजयोनिगतस्य वैराजस्य[3] न्यूङ्खो भवति। स्तोत्रिय एव न्यूङ्खस्योपदेशात्। तत्तत्स्थाने तु भवत्येव। न हि वैराजं तत्स्थानमन्यूङ्खमायेति (२५. ११) श्रुतेः। प्रगाथं चाग्निष्टोमपक्षे ऽपि नियमतः शंसेत्। तनूपृष्ठे ऽपि तथा रथन्तरस्य योनिं बृहतश्च।

७. ऋतुपरादारभ्य षष्ठात्पार्ष्ठिकादैयूळ्हिकात्सामूळ्हिकाद्वा तृतीयसवनं भवति।

८. कया देवानां कतमस्य यामनीति वैश्वदेवं भवति। चाग्निकस्य विश्वजितो बृहत्पृष्ठस्य। उभयपृष्ठे ऽपि बृहति प्रत्यक्षे। तृचस्तु न निवर्तते पष्ठाह्निकः[4]।

९. आ नो भद्रीयं वैश्वदेवमेकाहस्य विश्वजितः।

१०. सर्वपृष्ठे विश्वजिति यो विशेषः स उच्यते। पुरस्ता-न्मारुतस्य सूक्तस्य होता प्र वो महे मतय इत्येवमादिकमेवयामरुतं

---

१ A इत्येतत्स्व॰ C is not quite legible; but it seems to agree by alt. (स्वसं) with A. २ A त्वाविशेषात्। ३ A om. वैराजस्य। ४ C (orig) D षष्ठाहः।

शंसति । तत्तत्पृष्ठे ऽप्ययं धर्मो[1] विश्वजिति सर्वपृष्ठस्याविशेषत्वात्[2] । तनूपृष्ठपरोक्षपृष्ठे अच्छावाकस्य शिल्पत्वात् । विश्वजितीत्यतिरेको न[3] ऐकाहिकसात्रिकाहीनिकार्थत्वाद्विश्वजिद्ग्रहणस्य[4] । मारुतस्य सूक्तस्येति सूक्तग्रहणात् आवापोत्तरकालमेवयामरुत्तं । तथाग्निमारुते रौद्रीं शस्त्वा होतैवयामरुत्तं पङ्क्तिशंसं शंसतीति (२५. १३) श्रुतेः ।

११. जगतीशंसं पच्छः शस्यमित्यर्थः । अतिजागतत्वाच्च स्यात् । अन्यूङ्खमिति न्यूङ्खस्य प्रतिषेधान्नित्यो ऽस्य न न्यूङ्ख इत्येतत् ज्ञापयति ।

१२. पङ्क्तिशंसं वा शंसेत् । सह न्यूङ्खेन ।

१३. पङ्क्तिशंसमेव ।

१४. त्वमग्ने यज्ञानां होतेति क्रमेण द्वौ तृचावग्निष्टोमसाम्नः स्तोत्रियानुरूपौ भवतः । द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचार-स्तदाचरणं चायुष्यमिति ।

## इति शाङ्खायनसूत्रभाष्ये एकादशो ऽध्यायः समाप्तः ।

---

शाङ्खायनसूत्रस्य सम्यं शिष्यहितेच्छया ।
वरदत्तसुतो भाष्यमानर्तीयो ऽकरोच्चवम् ॥

---

१ C D om. धर्मो ।
२ C D om. त्व ।
३ C D °रेकात् ।
४ D om. स्य ।

# अथ द्वादशो ऽध्यायः।

## १.

१. श्रुतिक्रमेण येषामङ्गां होत्रमुक्तं तेषामेव होत्रकाणां यदङ्गत्वं तदुच्यते। तत्र होत्रकाणामित्ययमधिकारो यदित ऊर्ध्वमनुक्रमिष्याम आ द्वादशाध्यायपरिसमाप्तेः तत्सामान्यमुच्यमानं होत्रकाणामेव भवतीति।

२. अयमप्यधिकारः। आ माध्यन्दिनेषु विकार इत्यतः (१२. ६. १)। अतश्च स्तोमातिशंसः प्रातःसवन एव। तथा च श्रुतिः। स्तोमातिशंसं प्रातःसवनेषु शस्त्रेति कर्मवचनादेतावत्कर्म यदितोच्यते। तेन चोक्थमुखानि न भवन्ति।

३. आ नो मित्रावरुणा मित्रं वयं हवामहे। मित्रं हुवे पूतदक्षं। अयं वां मित्रावरुणा। पुरूरुणा चिद्ध्यस्ति। प्रति वां सूर उदिते। प्र वो मित्राय गायत। यदद्य सूर उदिते प्र मित्रयोर्वरुणयोः। ता नः शक्तं पार्थिवस्येति स्तोत्रिया मैत्रावरुणस्य भवन्ति। ननु षळेते भवन्तीति। उच्यते। दशरात्रे। कुत एतत्। आ नो मित्रावरुणा मित्रं वयमिति प्राकृतयोरुपदेशात्। तथा हि दशानामङ्गां दशैव स्तोत्रिया यथासङ्ख्येन भवन्ति[1]। तथा चोक्तं। वचनलक्षणो विकार इति। तेन प्रायणीयोदयनीययोः प्राकृतक्रिया।

---

१ A ins. इति।

४. आ याहि सुषुमा हि ते। इन्द्रमिद्गाथिनो बृहत्। इन्द्रेण सं हि दृक्षसे। इन्द्रो दधीचो अस्थभिः। उत्तिष्ठन्नोजसा सह। भिन्धि विश्वा अप द्विषः। प्र सम्राजं चर्षणीनां। तमिन्द्रं वाजयामसि। महाँ इन्द्रो य ओजसा। युञ्जन्ति ब्रध्नमरुषमिति ब्राह्मणाच्छंसिनः स्तोत्रिया दशरात्रे यथासंख्येन।

५. प्रातःसवने स्तोत्रिया अच्छावाकस्य दशाहानामङ्गां। तमीळिष्व यो अर्चिषा ता हि मध्यन्त ईळत इत्येतयोर्विकल्पो दशमे ऽहनि॥

---

२.

१. द्विरात्रप्रभृतिषु द्वादशाहविकारेषु अद्वादशाहविकारेषु च। पृष्ठ्यस्य पञ्चमं चतुर्थमहः इत्येवमादिषु अहःसंघातेषु सत्त्राहीनादिषु अनुरूपाः श्वोभाविसुत्ये ऽहनि ये स्तोत्रियास्ते भवन्ति। यदि पुनः समानस्तोत्रियं श्वस्तनमहस्ततः[1] परस्मिन्नहनि ये स्तोत्रियास्ते ऽनुरूपाः कर्तव्याः। अपिमन्द्रात्परतरे ऽप्यहनि।

२. परे ऽहन्यसमानस्तोत्रिये।

३. नित्यानवश्यंभाविनो ये ऽन्येष्वपि स्तोमेषु न ह्रसन्ति[2] तानन्यान्छन्दसां पर्यासा इत्येवमाचक्षते याज्ञिकाः। संज्ञाकरणं शास्त्रसंव्यवहारार्थं[3]। स्तोत्रियानुरूपौ च नित्यौ। छन्दोगानुविधानात्। ततः[4] स्तोत्रियानुरूपपर्यासानां नास्ति ह्रासः।

---

१ C अहःसमादिषु ततः प०; *over the line* अहे (?) D श्वादिषु म ततः।
२ M ते भवन्ति। ३ M om. शास्त्र। ४ C D M om. ततः।

४. प्रति वां सूर उदिते मित्रं गृणीष इत्येवमादिकस्तृचः पर्यासो मैत्रावरुणस्य भवति ।

५. यदा प्रति वां सूर उदिते इत्ययं तृचः स्तोत्रियत्वे वा विनियुक्तो ऽनुरूपत्वे वा तदा काव्येभिरदाभ्येत्ययं तृचः पर्यासो भवति ।

६. विद्यमाने ग्रस्तनस्तोत्रिये काव्येभिरदाभ्येति वा पर्यासो भवति ।

७. उच्छेदभि श्रुतामघमित्ययं तृचः पर्यासो भवति ब्राह्मणाच्छंसिनः । यद्यपि विषुवति छन्दोगाः स्तोत्रियमेतं कुर्वन्ति तथाप्ययमेव पर्यासो भवति ।

८. इन्द्राग्नी अवसा गतमित्येष तृचो ऽच्छावाकस्य पर्यासः ।

९. अन्तरेणानुरूपं पर्यासं च वक्ष्यमाणं आवापस्थानं भवति । आवाप इति वक्तव्ये स्थानग्रहणं सर्वेण शस्त्रेण स्तोममतिशंसेत् ।

१० एकयर्चा द्वाभ्यां वा यथासंख्याविशिष्टं स्तोमं त्रिवृदादिक्रमतिशंसन्ति होत्रकाः । न स स्तोमो देवान् गच्छति यो नातिशस्यत इति श्रुतेः । [1]अदृष्टत्वान्मैत्रावरुणस्तोमातिरेकः वायस्तोमे ऽप्येवमेव[2] ।

११. अथवा शस्त्रेण त्रिवृति स्तोमातिशंसनं । ननु स्तोत्रियानुरूपपर्यासानां नित्यत्वादर्थसिद्धमेतत् । सत्यम् । त्रिवृतो ऽप्यंतराः स्तोमास्त्रिवृद्विकाराः । कुतो ह्यन्यं स्तोममाहरिष्यन्तीति श्रुतिवचनात् । त्रिवृत्येवायं धर्मो नान्येषु त्रिवृद्विकारेषु सूत्रारम्भात् ।

---

१ A अत्र इ॰ ।   २ C (orig.) [illegible] अदृष्टत्वाय C (sec. h.) adds इव M अदृष्टत्वादृवपसोम॰ ।

१२. वक्ष्यति विश्वजिति सर्वपृष्ठे महानाम्नीनां मैत्रावरुण इत्येवमादि। तस्मिन्विश्वजिति सर्वपृष्ठे भूयसा स्तोममतिशंसन्ति। तच प्रशस्तस्य विहितत्वादुच्चारस्तो नियमार्थः।

१३. एकया[1] स्तोमातिशंसनं होत्रकाणां दशमे ऽहनि। अन्यत्र त्रिवृद्दशरात्रादयं नियमः।

१४. युवं दक्षं धृतव्रता। आ नो बर्हिः रिशादसः। यं रक्षन्ति प्रचेतसः। कया राधाम सखायः। ऋजुनीती नो वरुणः। मा कस्याद्भुतक्रतू मित्रो नो अत्यंहतिं। महि वो महतामवः[2]। सोमस्य मित्रावरुणा। ते नः सन्तु युजः सदा। प्र वो वां मित्रावरुणा। महि त्रीणामवो ऽस्तु। एता एकपातिन्यः। सूक्तादिमदिष्टत्वात् सूक्तनिवृत्त्यर्थमेकपातिनीग्रहणम्।

१५. काव्येभिरदाभ्येत्ययं तृचः। आ नो गन्तं रिशादसेत्ययं तृचः। एवमेतौ तृचौ।

१६. यथा नो मित्रावरुणा यथा नो मित्रावरुणेत्येते वर्जयित्वा। सप्तचत्वारिंशन्मित्रावरुणदेवत्यो गायत्रो दाशतयीषु सर्वास्वेव बह्वृचशाखासु। दाशतयीग्रहणं काव्ययोराजानेष्वेवमादिनिवृत्त्यर्थं। बह्वृचग्रहणं सूत्रपाठक्रमार्थं। तेन स्तोमातिशंसने स्तोत्रियानुरूपान्यथाक्रमं प्रचिन्येकपातिनीस्ततस्तृचौ। तासां मैत्रावरुण इति तासां मध्ये यास्छन्दोरूपयुक्ता अक्लो रूपसंपन्ना मैत्रावरुणस्ता आवपेत् मैत्रावरुणः स्वेषु शस्त्रेषु।

---

१ C (orig.) D एकयर्चा।    २ M ०वो प्रवसः।

१७. दाशतयीष्विति वर्तते[1]। स्तोमातिशंसनाधिकार एव। सर्वास्वपि दाशतयीषु निपुणमन्विष्यमाणानि चतुश्चत्वारिंशदैन्द्राणि गायत्राणि। तेषां यथोपयोगं यथाछन्दो ऽनुरूपं स्तोमातिशंसनार्थमावापस्थाने शंसेत्। अत्र चाग्निस्वामिना तत्प्रख्यापनाय श्लोकाः कृतास्त उच्यन्ते।

सङ्ख्यामेषां प्रवक्ष्यामि वेदाध्यायक्रमेण तु[2]।
इन्द्र याहीति तिस्रः स्युः सूक्ते च द्वे सरूपेति ॥१॥
युञ्जन्तीति तृचो ज्ञेयः सूक्तानि त्रीण्यथेन्द्रमित्।
सुकमा त्वा वहन्तु स्वादा व इन्द्रं त्रिपद्यकम् ॥२॥
तृच इन्द्रो दधीचः स्यादिन्द्रो अङ्ग महत्तृचः।
वार्चंत्याय दशकमिन्द्र त्वा त्रीणि सूक्तानि ॥३॥
इदं ह्यन्वोजसा तिस्रो धानावन्तमतस्तत्।
त्रीणि सूनेकिरिन्द्रेति तेभ्यः पञ्चसमुद्धरेत् ॥४॥
वामं वाममयेतद्दित्कनीनकेव वङ्कचम्।
अपोषा इति चोपस्थे द्वे निरुक्ते यतः प्रोक्ते ॥५॥
य आनयत्परा चिंशम्[3] व इन्द्राय मादनम्।
इदं वसो सुतं सूक्तं द्वे अन्त्ये अत उद्धरेत् ॥६॥
एका च स्वादवः सोमा महाँ इन्द्र इति सूक्तम्।
तृचं विनान्त्यं यदिन्द्राहं प्र सम्राजं ततः सूक्ते ॥७॥

---

1 M om. दाशतयीष्विति वर्तते।

2 I am not able to account for all the readings in these partly obscure verses.

3 C D च आनयत्पर°।

१२. वक्ष्यति विश्वजिति सर्वपृष्ठे महानाम्नीषां मैत्रावरुण इत्येवमादि। तस्मिन्विश्वजिति सर्वपृष्ठे भूयसा स्तोममतिशंसन्ति। तच शस्त्रस्य विहितत्वात्तूचारम्भो नियमार्थः।

१३. एकया[१] स्तोमातिशंसनं होत्रकाणां द्वयह्ने ऽहनि। अन्यच विहद्गराचाद्यं नियमः।

१४. युवं हवं धृतमता। आ नो बर्हीं रिशादसः। यं रचन्ति प्रचेतसः। कया राधाम सखायः। ऋजुनीती नो वरुणः। मा कस्याद्भुतक्रतू मित्रो नो अत्यंहतिं। महि वो महतामवः[२]। सोमस्य मित्रावरुणा। ते नः सन्तु युजः सदा। प्र यो वां मित्रावरुणा। *महि चौणामवो ऽस्तु। एता एकपातिन्यः।* सूक्तादिमहिष्टत्वात् सूक्तनिवृत्त्यर्थमेकपातिनीग्रहणम्।

१५. कार्व्येभिरदाभ्येत्ययं तृचः। आ नो गन्तं रिशादसेत्ययं तृचः। एवमेतौ तृचौ।

१६. यथा नो मित्रावरुणा यजा नो मित्रावरुणेत्येते वर्जयित्वा। समस्तासिंश्चमित्रावरुणदेवत्यो गायत्र्यो दाशतयीषु सर्वास्वेव वक्ष्यमाणास्। दाशतयीग्रहणं काव्ययोराजानेष्वेवमादिनिवृत्त्यर्थं। सङ्ख्याग्रहणं सूत्रपाठक्रमार्थं। तेन स्तोमातिशंसने स्तोत्रियाद्रूपान्यथाक्रमं प्रचिपेदेकपातिनीस्ततृचौ। तासां मैत्रावरुण इति तासां मध्ये याश्छन्दोरूपयुक्ता अक्षरो रूपसंपन्ना मैत्रावरुणस्ता आवपेत् मैत्रावरुणः स्वेषु शस्त्रेषु।

---

१ C (orig.) D एकयर्चा।   २ M ०वो प्रथमः।

१७. द्वागतयोश्चिति वर्तते[1]। स्तोमातिशंसनाधिकार एव। सर्वास्वपि द्वागतयोषु निपुणमन्विष्यमाणानि चतुश्चत्वारिंशदैन्द्राणि गायत्राणि। तेषां यथोपयोगं यथाछन्दो ऽनुरूपं स्तोमातिशंसनार्थमावापस्थाने शंसेत्। अत्र चाग्निस्वामिना तत्प्रख्यापनाय श्लोकाः कृतास्त उच्यन्ते।

सङ्ख्यामेषां प्रवक्ष्यामि वेदाम्नायक्रमेण तु[2]।
इन्द्र याहीति तिस्रः स्युः सूक्ते च द्वे सुरूपेति ॥१॥
युञ्जन्तीति त्र्यो ज्ञेयः सूक्तानि चीण्यथेन्द्रमित्।
सुतमा त्वा वहन्तु स्वादा व इन्द्रं चिपञ्चकम् ॥२॥
त्वप इन्द्रो दधीचः स्यादिन्द्रो अङ्ग मघत्वपः।
वार्षंहत्याय दशकमिन्द्र त्वा चीणि सूक्तानि ॥३॥
इदं ह्यन्वोजसा तिस्रो धानावन्तसुतस्तस्य।
चीणि सुनेकिरिन्द्रेति तेभ्यः पञ्चमुद्धरेत् ॥४॥
वामं वाममथैतद्वेत्कनीनकेव वक्रुचम्।
अपोषा इति चोपस्थे द्वे निरुक्ते यतः प्रोक्ते ॥५॥
य आनयत्परा विंशत्य[3] व इन्द्राय मादनम्।
इदं वसो सुतं सूक्तं द्वे अन्ये अत उद्धरेत् ॥६॥
एका च स्वादवः सोमा महाँ इन्द्र इति सूक्तम्।
त्र्यचं विनान्त्यं यदिन्द्राहं प्र सम्राजं ततः सूक्ते ॥७॥

---

1. M om. द्वागतयोश्चिति वर्तते।
2. I am not able to account for all the readings in these partly obscure verses.
3. C D य आनयत्परा॰।

आ यादि सुषुमान्याभ्यां[1] प्र कृतान्यथ सूक्ते द्वे।
धृतस्रस्त्वावतः पुरु उत्वा मन्दन्तु सूक्ते द्वे ॥८॥
अभि प्र गोपतिं इत्य उत्तिष्ठन्नोजसा निरुः।
अतः पञ्च नवर्चानि।
अज्ञानः पुरोवाग्रं स्वावधान्यं बला तु नः ॥९॥
आ प्र द्रवेत्यग्निर्मेधा पुरुहूतं पुरुष्टुतम्।
दार्षिभ्रसूक्तमुद्देत्या अर्न लेष पञ्चकम् ॥१०॥
ईङ्खयन्तीर्भवेत्सूक्तं स्यात्तं त्यमिदतस्तथा।
आ यदिन्द्रस्य दद्वहे न हि घस्तव नो मम ॥११॥
यज्ञानाभिन्नभेदाच्च द्वचौ त्याज्यौ मतौ मम।
इयत्तु ते चतुर्थवं सूक्तले गण्यतामिदम् ॥१२॥
यश्च ते स्वादु च इत्यमिति स्यात्तस्य चिन्मतिः।
तामघे अनु हि देदे यज्ञगायोत्तरे ततः ॥१३॥
यान्तमित्युत्तरे तस्य गणे गायत्री चाग्ने दे।
गायत्रीवचने कार्यं प्रतिविद्धो यतो ऽध्यायः ॥१४॥
तिस्रो महत्तौयास्तु महत्त्वं हवामहे।
न गण्या मित्रदेवत्या न वा चेमं नु मायिनं ॥१५॥
यज्ञादद्देति मास्त्य ऐन्द्रमध्यात्तदुद्धृता।
क्रियन्ते रात्रिपर्याया इति स्यादयनं तु तत् ॥१६॥
[2]अन्ताध्वनिं त्यजेत्तस्मादितो आ भातिमित्येका।

---

१ C D सुषुमेणाभ्यां D प्राकृतान्यायसूक्ते द्वे M सषुवेनाभ्यां प्राकृतान्याथाद्वे।
२ D अन्त॰।

इन्द्र सोमं पिबाथ स्वा पिबन्तु ब्राह्मणानि तु ॥१७॥
इन्द्र[1] विश्वानि गव्येषु विश्वामित्रो ऽथ प्रियम् ।
इम स्तवाम्लमिंद्रं वं नह्यंतो[2] याथ चैव च ॥१८॥
वह जहस्थ उदगिति चैका चैकपातिन्यः ।
महधान्य[3] इति चैषा[4] महत्त्यैकपातिनी ॥१९॥
तं त्वा महत्ती परीतीयमपि स्वात्पतितुं[5] तत् ।
वात्याविशेषणमिदं तद्वानीं त्रीवन्योच्यते ॥२०॥
यो यजातीति चोत्तमं तु तुविशुष्म न यस्य ते ।
स्वादिष्ठयसु ते तथा चाभिष्टये सदा ॥२१॥
देवा[6] एते च संख्याख्याः सूक्तानां चोदना यतः ।
आगतेषु हि सूक्तेषु क्रियन्ते ऽनुष्टुभो यतः ॥२२॥
गायत्रमध्ये यानुष्टुप्तस्यास्तामपि न त्यजेत् ।
अर्थवादे यतश्चाह गायत्रीत्वमनुष्टुभः ॥२३॥
[7]इत्याम्नस्यायुष्यार्थप्रायाद्दोषकतुल्यनात् ।
पर्यायेषु प्रयत्नात्तु या भवेषु तथा भवेत् ॥२४॥
अर्थवादाश्च तत् कुर्यात् गायत्र्या अपि संपदम् ।
दशमे ऽहनि सुखार्थं तत्र चेत्स्यादिहापि सः ॥२५॥
[8]मध्यादोद्ध्रियमाणायामेकमेव भवेत्सूक्तम् ।
ज्ञापकं त्वं सु मेषं जामतं नवमं[9] विना ॥२६॥

---

१ C D इन्द्रं। २ A इन्द्र वं न ह्यंति या०, C इन्द्रं वम् ह्यंतीया०, D इन्द्र वं नह्यंतीयाच। ३ C D महधान्य०। ४ C चैषां, C D ०त्यैकपा०। ५ A पतितुं। ६ C D देव। ७ C D इत्यामंत्यायुष्यार्थप्रायोदोषक०। ८ C मध्यादोद्ध्रि०, D मध्याधोध्रिय०। ९ C (in marg.) ०र्मी।

उद्धृत्यान्त्या ऋचः सर्वगायत्र्यो चैव मध्यमा[1] ।
यथान्तरेषु शस्यन्तामिति चेत्तन्न युज्यते ॥२७॥
वशो हि विविधच्छन्दा[2] यत्र आरण्यके श्रुताः ।
वाजेन्द्र इव इत्येषा पर्याये यत्र उद्धृता ॥२८॥
प्राभृते शस्यते वापि वचनं कार्यवद्भवेत् ।
सूक्तैकदेशाः कर्तव्याः संख्याने तत्प्रयोजनम् ॥२९॥
रैवतस्य तु तृचाः स्यादे अपेतो जन्य इत्यपि ।
इन्द्रस्य नः शुनाशीरीये नाय दाशतयो[3] हि ॥३०॥
वायःस्तोत्रे प्रयोक्तव्याः सर्वशब्दो यतस्ततः ।
दयोर्हैपिकयोर्यच प्रोक्तं दाशतयीष्विति ॥३१॥
छन्दोरूपान्विता आर्षा कर्तव्याः श्रुत्यनुपदात् ।
विशुकाम् द्वयविंशत्या प्रयोज्यानां शतानि षट् ॥३२॥

१८. इहेन्द्राग्नी तोशेत्येवमादिके पक्षे स्तोमातिशंसनाया-च्छावाकस्यावापे भवतः ।

१९. पन्तोम आ सुते नर इत्येते द्वे भवतः ।

२०. उप स्रवेषु वप्सत इत्येका भवति । एकेति नियमार्थं । ततो यद्यपि च्छन्दोगा महाव्रत आ सुते सिञ्चत श्रियमिति स्तोत्रियं कुर्वन्ति तथाप्येकैवावापे प्रयोक्तव्या ।

२१. जुषेथां यज्ञमिष्टय इति षष्ठावापिक्यः ।

२२. षट्चत्वारिंशत्स्वप्यपि दाशतयीष्वैन्द्राग्न्यो गायत्र्यस्तासां यथास्तोमातिशंसं छन्दोरूपसंपन्ना आवपेदच्छावाकः । इन्द्रे अग्नेयं

1 C चैवमध्यमौ । 2 C D विविध० । 3 A दाशतया ।

वामस्य वामस्य ता ऊवे ता हि शश्वन्त इत्येताः षड्गायत्र्यः षड्ढ्योपदेशात् ।

२३. [1]तस्य ता नः शर्म पार्थिवस्य युञ्जन्ति ब्रध्नमरुषं ता हि शश्वन्त ईळते नमोभिश्च यो अर्चिषेति वा स्तोत्रिया इति (२५.१५) श्रुतेः । तत्पृष्ठे परोक्षपृष्ठे चैत एव ।

२४. षडहस्याह्नः पार्थिकस्य स्तोत्रियास्थानानुरूपान् ज्ञात्वा तत इतरेषां पञ्चानां प्रथमद्वितीयतृतीयचतुर्थपञ्चमानां[2] ये स्तोत्रियास्थानावापे शंसन्ति । इतरे पञ्च तदुक्तमिति (२५.१५) श्रुतेः ।

२५. आवृत्तास्तृचेष्वावृत्तस्तोमेषु विश्वजित्येवावृत्तेषु स्तोत्रियेष्वित्यर्थः । तस्मात्त चतुरावृत्तृचो भवतीति श्रुतेः ।

२६. एकाहभूतस्य[3] विश्वजित आवृत्तस्तोमेष्वपि ऊर्ध्वानेव शंसेत् ।

२७. त्रिकैः पर्यासैः परिदधाति । एवमेव श्रुतेः ।

---

### ३.

१. माध्यन्दिन इति माध्यन्दिनानि सवनानि चतुर्विंशतेरेवाह्नां वक्ष्यमाणानि तेषु विकारो अत उच्यते । विकारवचनादनुक्तं प्राकृतम् ।

२. शस्त्राणां यान्यन्यानि सूक्तानि तानि पर्यासमंज्ञानि भवन्ति । उत्तरयोरित्यप्राकृतस्यापि तृतीयसवनस्य ग्रहणं यथा स्यादिति ।

---

१ A शौनकाचार्यमित्यनुवर्तते तस्य । २ C D पञ्चानां । ३ D M om. C in marg.

१८. सर्वेषां होत्रकाणां[1] यच्चतुर्थषष्ठयोरह्नोः शस्त्रं तदुत्तमे छन्दोमे यथास्थं[2] भवति।

१९. त्वं महाँ इन्द्र तुभ्यं ह क्षा इत्येतत्सूक्तं मैत्रावरुणस्याहीनसूक्तस्थाने भवति। यत्र यस्मिन्नहनि होताहीनसूक्तं शंसेत्। तद्यथा। नवमे ऽहनि विषुवन्महाव्रतयोश्च। यद्यपि च चतुर्विंशे ऽभिजिति विषुवति विश्वजिति महाव्रतीये ऽहनीति श्रुतेस्तथाप्यविरोधः अहीनसूक्तानि सर्वैकाहिकानि शंसन्तीति श्रुतेः।

२०. त्वेह यत्पितरश्चिन्न इन्द्रेत्येता एकविंशतिश्छंदश्छन्दोमेषु चिष्वपि पुरस्तात्पर्यासस्य मैत्रावरुणः शंसेत्।

२१. मा चिदन्यद्वि शंसतेति स्तोत्रियः प्रगाथः। मा भेम मा श्रमिष्मेत्यनुरूपः प्रगाथः। एतौ दशमे ऽहन्यस्य मैत्रावरुणस्य भवतः। अशंसेति वचनात् स्तोत्रियानौ रथन्तरक्रियायां वामदेव्यमेवास्य भवति।

२२. आ धूर्ष्वस्मै दधाताश्वानिति चास्य मैत्रावरुणस्य द्विपदा भवति।

---

४.

१. उक्तं दशानामह्नां मैत्रावरुणस्य माध्यन्दिनमनन्तरं ब्राह्मणाच्छंसिन उच्यते। कं नव्यो अतसीनामित्ययं प्रगाथो ब्राह्मणाच्छंसिनो माध्यन्दिनेष्वनुरूपादनन्तरो नान्यस्मात्तेन न द्विश्छन्दो-

---

१ M om. सर्वेषां होत्रकाणां। २ A C D om. छन्दोमे, M om. यथास्थं।

मेषु । कद्वानिति तस्य संज्ञा । ऐकाहिकस्य स्थान इत्यैकाहिक-निवृत्त्यर्थं वचनम् ।

२. ब्रह्मणा ते ब्रह्मयुजा युनज्मीत्युक्थमुखीया भवति । चशब्दा-दनन्तरमेव । तत इयमपि तद्विधिष्यते । छन्दोमेषु यदार्षेये सूक्ते तदार्षेये उक्थमुखीये इतरयोरिति (२८. ४) श्रुतेः । तृतीयमेव युक्ता वचनाच्च ।

३. उद् ब्रह्माण्यैरत श्रवस्येत्यहरहः पर्यास एव भवति । छन्दो-मेषु तद्विधिष्यते । सदैवास्य पर्यासत्वे[1] विनियोगत्वात् ।

४. वयं घ त्वा सुतावन्तः क ईं वेद सुते सचेति स्तोत्रियानु-रूपौ तृतीये ऽहनि भवतः ।

५. पूर्वोक्तावेव स्तोत्रियानुरूपौ प्रथमद्वितीययोश्छन्दोमयोः ।

६. तुशब्दो विशेषार्थः । को ऽयं विशेषः । मध्यमे छन्दोमे पूर्वोक्तावेव स्तोत्रियानुरूपौ विपर्यस्तौ भवतः ।

७. यदिन्द्र प्रागपागुदगिति वा स्तोत्रियः प्रगाथः । त्रीपरिष्टो[2] ऽनुरूपः । एतौ वा स्तोत्रियानुरूपौ प्रगाथौ मध्यमे छन्दोमे भवतः[3] । स्तोत्रियानुरूपौ प्रगाथाविति स्तोत्रियानुरूपग्रहणमविपर्यासार्थम्[4] ।

८. अध्वर्यवो भरतेन्द्राय सोममित्येता एकादश शंसेत् तृतीये पार्ष्ठिके ऽहनि[5] । तृतीयवचनादयं[6] विधिर्मध्यमे छन्दोमे न भवति । पूर्व एव तु भवति ।

---

१ C (orig.) D पर्यासे, A -योगात् । २ A चपरि॰ M चपरिष्टा॰ D om. ३ C om. मध्यमे छन्दोमे भवतः D om. the whole passage. ४ C विपर्यस्तार्थं, M विपर्यस्तार्थम् । ५ C D om. पार्ष्ठिके ऽहनि । ६ C D तृतीयवचनाद्.

९. विश्वाः पृतना अभिभूतरं नरमिति चतुर्थे ऽहनि स्तोत्रियः कार्यः।

१०. तमिन्द्रं जोहवीमि मघवानमुग्रं मत्स्यपायि ते महः अस्मामस्मा इदन्धस इति अंशार्धा ऽनुरूपः।

११. कदा वसो स्तोत्रं हर्यत आ यो वाचा विवाचो मृध्रवाचः। एतौ प्रिस्वतृचौ भवतः।

१२. य एक इद्धव्यश्चर्षणीनामित्येतत्सूक्तं चतुर्थे ऽहनि।

१३. इन्द्रो मदाय वावृधे मदेमदे हि नो ददिरित्येतौ स्तोत्रियानुरूपौ पञ्चमे ऽहनि भवतः।

१४. आ याहि सुषुमा हि ते। यो न इन्द्राभितो जन इत्येतौ प्रिस्वतृचौ पञ्चमे ऽहनि भवतः।

१५. यस्तिग्मशृङ्गो वृषभो न भीम इत्येतत् स्तोत्रियादारभ्य पञ्चमे ऽहनि भवति।

१६. सुरूपकृत्नुमूतय इत्येतौ स्तोत्रियानुरूपौ षष्ठे ऽहनि भवतः।

१७. त्वया वयं मघवन्पूर्व्ये धन इत्येतत् प्रिस्वतृचं षष्ठे ऽहनि भवति।

१८. अस्मा इदु प्र तवसे तुरायेति सूक्तमित्येतत् सुरूपकृत्नुमूतय इत्यत आरभ्य षष्ठे ऽहनि भवति।

१९. तदेतदस्मा इदु प्र तवस इत्युक्तम्।

२०. आयन्त इव सूर्यं शग्ध्यू षु इत्येतौ स्तोत्रियानुरूपौ प्रगाथा उत्तमे छन्दोमे। यत्प्रथमयोरह्नोः शस्त्रं[1] तत्र समानम्।

---

[1] A. शस्त्रमित्यादि।

२१. त्वं महाँ इन्द्र यो ह शुष्मैरित्येतत्सूक्तमहीनसूक्तस्य[1] स्थाने शस्यते।

२२. इन्द्रं स्तवा नृतमं यस्य मह्नेत्येतत् सूक्तं त्रिष्वपि च्छन्दोमेषु पुरस्तात्पर्यासस्य भवति।

२३. उदु त्ये मधुमत्तमाः उदिन्न्वस्य रिच्यत इत्येतौ स्तोत्रियानुरूपौ प्रगाथौ द्वमे ऽहनि क्रियेते।

२४. त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्म इत्ययं वा स्तोत्रियो द्वमे ऽहनि ब्राह्मणाच्छंसिनो भवति।

२५. उत्तमा च त्रिकद्रुकीयस्य। तमिन्द्रं जोहवीमि मघवानमुग्रं। विश्वाः पृतना अभिभूतरं नरमित्येष संचार्यो ऽनुरूपः।

२६. रायस्कामो वज्रहस्तं सुदक्षिणमित्येषा। द्विपदायत्रणादोन्यतुग्रंसनयोग्यत्वे ऽपि नापरा प्रक्षेप्तव्या।

५.

१. कद्रू न्वस्याकृतमित्ययं कदाप्रगाथो ऽच्छावाकस्यानुरूपादनन्तरो भवति। अच्छावाकाधिकारो ऽन्तरेण प्रायणीयोदयनीयाविति यावत्।

२. उरुं नो लोकमनु नेषि विद्वानित्युक्थ्यमुखीया भवति।

३. अभि तष्टेव दीधया मनीषामित्यहरहः पर्यासः।

४. त्वामिदा ह्यो नरो वयमेनमिदा ह्य इत्येतौ स्तोत्रियानुरूपौ प्रगाथौ भवतः।

---

१ M. °त्येतत्स्थान्। च°।

५. अपूर्व्या पुरुतमान्यस्मा इति सूक्तं द्वितीये ऽहन्येतच्छस्त्रम्।

६. तरणिरित्सिषासतीति स्तोत्रियः। नरोभिर्वो विदद्वसु-मित्यनुरूपः।

७. य ओजिष्ठ इन्द्र तं सु नो दा इत्येतत्सूक्तं यथोक्तेन ग्रस्तेन सह तृतीये ऽहनि भवति।

८. यो राजा चर्षणीनामिति स्तोत्रियः। नकिष्टं कर्मणा नशदित्यनुरूपः।

९. अधायोरिन्द्रश्चर्कश इति तृचः। इन्द्र सोममिमं पिबेति तृचः। एतौ भिन्नतृचौ।

१०. सं च त्वे जग्मुर्गिर इन्द्र पूर्वीरित्येतत्सूक्तं चतुर्थे ऽहनि पूर्वोक्तेन स्तोत्रियादिना सह भवति।

११. स्वादोरित्था विषूवत इति स्तोत्रियः। इत्था हि सोम इन्मद इत्यनुरूपः।

१२. यच्चिद्धि सत्य सोमपा इति तृचः। अव यत्त्वं शतक्रत-विति तृचः। एतौ भिन्नतृचौ।

१३. कदा भुवद्रथक्षयाणि ब्रह्मेति पञ्चमे ऽहनि भवति।

१४. उभे यदिन्द्र रोदसी इत्येतौ आवापक्रमेण स्तोत्रियानु-रूपौ भवतः। उभे यदिन्द्रेति स्तोत्रिय उत्तरो ऽनुरूप इत्येवं नोक्तम्। कथं नाम छन्दोगानां स्तोत्रियक्रमान्यत्वे तथैव प्रस्ता श्रेषो ऽनुरूपः स्यादिति।

१५. विदुष्टे अस्य वीर्यस्य पूरव इत्येतास्तिस्रः शिल्पम्।

१६. ग्रावद्भिर्दुहितुर्नेष्यं गादित्येतत्सूक्तं च मिश्रं षष्ठेऽहनि भवति[1]।

१७. ग्रावद्भिरित्येतत्।

१८. नकिष्टं कर्मणा नशदिति स्तोत्रियः। न त्वा बृहन्तो अद्रय इत्यनुरूपः। एतौ प्रथमे छन्दोमे भवतः।

१९. उभयं शृणवच्च न इति स्तोत्रियानुरूपौ मध्यमे छन्दोमे भवतः।

२०. यत इन्द्र भयामहे इति स्तोत्रियानुरूपौ उत्तमे छन्दोमे भवतः।

२१. त्रिष्वपि छन्दोमेषु यथोक्ताः।

२२. इच्छन्ति त्वा सोम्यासः सखाय इत्येतत्सूक्तं त्रिष्वपि छन्दोमेषु पुरस्तात्पर्यासस्य भवति।

२३. अया वाजं देवहितं सनेमेत्येषा द्विपदा दशमेऽहनि भवति।

२४. ऐकाहिकमाग्निष्टोमिकं भ्रय इद्वाद्ध इत्येतत् पूर्वं द्वयोरैकाहिकयोः। पश्चाद्द्विपदाया अनन्तरं प्राक् पर्यासात्।

---

## ६.

१. कुर्यादिति वाक्यशेषः। सर्वे चकाराः सावचर्यसमुच्चयार्थाः।

२. अन्तरेणोक्थमुखीयां[2] प्रतिशोचकं सूक्ते च प्रक्षेपः पर्यासस्यावापस्य स्थानम्।

---

१ A. सूक्तं मिश्रं च। २ C D M om.

१८. [1]आमसूक्तादनन्तरमहीनसूक्तानां शंसनं कृत्वा ततो होत्रका ऐकाहिकीभिर्ऋग्भिः परिदधति। या एकाहे परिधानीयास्ताभिः परिधानं कुर्वन्तीत्यर्थः।

१९. एकाहभूतस्य विश्वजितः सर्वपृष्ठस्यैकाहिकान्पर्यासान् सकृत्स्थानेवोर्ध्वमहीनसूक्तेभ्यः शंसेयुः।

---

## ७.

१. विश्वजिदधिकारो ऽनुवर्तते। विश्वजित्युक्थेषु क्रियमाणेषु माध्यन्दिने सवने वालखिल्या वृषाकपिं विष्णुन्यङ्गमित्येतदुद्धृत्य यथोक्तान्परिशेषान्माध्यन्दिने सवने होत्रकाः शंसन्ति।

२. विश्वजिति[2] षष्ठादह्न उक्थ्यानि भवन्ति।

३. प्रदेशान्तरार्था अपि परिभाषेयं। तदर्थो ऽपशब्दो विशेषाधिकारार्थः। यद्दिशब्दो ऽपि तृतीयसवनातिदेश एवेत्येतत् ज्ञापयितुं नाङ्गः पृष्ठ्याहान्यनुपूर्वमित्यादौ (१४. १८.२)। षष्ठाह्निकं तृतीयसवनं अपर्वपृष्ठे ऽहनि अन्यस्मिन्नहनि प्रदिष्टं। तद्यथा वाजपेये पुरुषमेधे गर्गत्रिरात्रे पञ्चरात्रादिषु द्वितीयादह्न उक्थ्यानि भवन्ति।

४. परोक्षपृष्ठे विश्वजिति प्रतिशिल्पानि वक्ष्यमाणानि क्रियन्ते।

५. शंसतीति मैत्रावरुणस्य प्रतिशिल्पक्रियोच्यते[3]। उद्धृत्य वालखिल्याः पिबा सुतस्य रसिन इत्येन्द्रान् प्रगाथाञ्छंसति। यावत्य

१ M कृतमावपनार०। २ C D विश्वजिदिति। ३ C D ०क्रियं।

उद्धियन्ते प्रगाथर्चा अपि तावत्यः प्रतिशिल्पवचनात्। ततो माध्यन्दिने सवने षड्विंशतिं प्रगाथाञ्छंसति। तृतीयसवने त्रयस्त्रिंशदृचान्[1] तत्परिमाणत्वात्। पिबा सुतस्य रसिन इति पञ्च। यदिन्द्र प्रागपागुदगिति सप्त। वास्तोष्पते ध्रुवा स्थूणेत्येकः। उभयं शृणवच्च न इति नव। तरोभिर्वः सप्त। यो राजा चर्षणीनामिति त्रयः[2]। विश्वेत्ता विष्णुरित्येकः। यार्हताः प्रगाथाः प्रतिशिल्पत्वात्।

६. वृषाकपिं मधुमन्तमनुद्धृत्य वृषाकपिसंमिता एव न्यूङ्खवर्जिता इन्द्रो मदायेत्येवमाद्याः पङ्क्तीरैन्द्रीः शंसति[3]। इन्द्रो मदायेति चतुर्दश स्वादोरित्थेति तिस्रः अस्माकमिन्द्रेहि न इत्येका अस्मा इत्काव्यं वच इत्येका प्रो अस्मा उपस्तुतिमिति षट् उज्जातमिन्द्र ते शव इति तिस्रः आ तू सुशिप्र दंपते कन्या वारवायतीति द्वे नकिर्देवा मिनीमसीति च नूनं तं नव्यमिति च। उत्तमा या पङ्क्तिरिति व्यपदेशात्।

७. अच्छावाकस्तु प्रतिशिल्पक्रियायां विष्णुन्यङ्गमेव शंसति।

८. इति यदुक्तमेतत्परोक्षष्ठे भवति।

---

८.

१. अथानन्तरं विश्वजिच्छिल्पे यो विधिः स उच्यते।

२. ऐकाहिकाः प्रगाथाञ्छस्त्वा ततो ऽनन्तरं मैत्रावरुणो वालखिल्याः शंसति। ब्राह्मणाच्छंसी वृषाकपिं। अच्छावाको

---

१ C तृचा°। २ C (orig.) D तिस्रः।

३ C (orig.) D om. the text from वृषाकपिं to शंसति।

विष्णुन्यङ्गमिति । होता नाभानेदिष्ठं। ऐकाहिकवचनमग्निष्टोमस्यैव विश्वजितो ऽधिकारार्थं। यद्यपि श्रुतौ स्तोत्रियानुरूपौ शस्त्वा वालखिल्याः शंसतीत्युक्तं तथापि पूर्वकालमात्रं तद्विश्वजित्प्रकारादूर्ध्वं प्रगाथेभ्यः शिल्पविधानं। अहर्गणे चोर्ध्वमुक्थमुखीयायाः परिभाषितत्वात् । ऊचान्वा वालखिल्यादीन् शंसेत् ।

३. ऊचपचे वालखिल्यानां चतुर्थत्वं भवति ।

४. प्रत्येकं सामसूक्तादीनां चयस्त्रयस्तृचास्तदर्थां वीप्सा । होत्रका विश्वजिति सामसूक्तादीनां[1] त्रींस्त्रींस्तृचान् शंसन्ति । होत्रकाधिकारे पुनर्होत्रकग्रहणं होतुर्नाभानेदिष्ठार्थम्[2] ।

५. य एव विश्वजिति त्रींस्त्रींस्तृचान् होत्रकाः शंसन्ति सामसूक्तानां यथायथं ऊचशंसनेन चयस्तृचा एवमहीनसूक्तानां पर्यायाणामित्येष विकारो नियमतः। उत्तरस्तु विकल्पेन। विश्वजिच्छिल्पग्रहणं होतुरपि यथा स्यात् ।

६. येषु निविद्धीयते तानिविद्धानीयांस्तृचान् होता शंसेत् । आ यद्दुवस्याद् दुवसे न कारुरिति[3] अनुत्तमा ते मघवन् नकिर्न्वित्येका कयाशुभीया एवं ऊचः क्रियते। अनुत्तमा त इति परिधानीयोत्तराः पूर्वाः शस्त्वा यथास्मिन् धीयते निविदित्यविशेषेणोक्तत्वात् ।

७. युवोर्यदि सख्यायास्मे इति नाभानेदिष्ठस्य यस्तृचस्तोदितः सो ऽयमेव कर्तव्यो निविद्धानीय इति ।

---

१ A साम॰ C सम॰। २ A ॰दिष्ठस्यार्थम्। ३ C D ins. इ।

८. ये यज्ञेन दक्षिणया समक्ता इत्येतत्सूक्तं नियमतो न द्वचः। युवोर्यदीत्येका[१] शस्त्वा तत्र एतत्सूक्तं ततः परिशिष्टे शंसति।

९. स्वस्ति नो मिमीतामश्विना भग इत्येतत्तृचं[२] सामूह्निके वैयूह्निके वा तृतीयसवने निविद्धानीयं कर्तव्यम्। तृचवचनं विकल्पबाधनार्थं क्रियते।

१०. प्र वो मह इत्येवयामरुत्सूक्तं शंसेत्। चकारो माहनान्तरेण सह[३] समुच्चयार्थः।

११. प्रातःसवने यदुक्तं विश्वजित इतरेषां पञ्चानां स्तोत्रियाद्यंशमिति तस्यापवादः। यथास्तोमं छन्दोगवशेन होतुर्होत्रकाणां च प्रातःसवनं भवति। पञ्चाप्रातःसवनस्य वचनं विकल्पनिवृत्त्यर्थम्।

---

९.

१. होत्रकाधिकारोऽनुवर्तते। तत्र आग्न्याधेयिकं तृचकृतमिह न भवति। त्रिवृद्वग्रराजस्य विधिं वक्ष्याम इति वाक्यशेषः। तृचकृतं शस्त्रं भवति वक्ष्यमाणेन विधिना।

२. निविद्धानवचनसामर्थ्यादौ परिशिष्टसूक्ते[४] होता होत्रकाश्च आज्यानामाद्यांस्तृचान् शंसेयुः।

३. निविद्धानानां सूक्तानामुत्तमांस्तृचान् होता शंसेत्।

४. यानीतराणि निविद्धानव्यतिरेकेण सूक्तानि तेषामेकैकां शंसेयुः शिष्टतृचानां च।

---

१ M युवोर्यदीति सप्तर्चा; om. तत्र एतत्सूक्तं। २ M inserts नियमतः।
३ C D om. सह। ४ A C D परिशि०।

५. षष्ठस्याह्नः समानं विश्वजिच्छिल्पेन शस्त्रं शिल्पानाम्। षष्ठग्रहणादन्यत्रापि षष्ठे ऽहन्यग्निष्टोमसंस्थे शिल्पानामेव भावार्थे[1] आरम्भः। सर्वस्वे द्वादशरात्रे चाहीने अद्वादशरात्रे ऽपि सत्त्वे तुश-ब्दात्पूर्वमित्याविरोधो न्याय्यः[2]।

६. समानमेव विश्वजिच्छिल्पेन शौचवृक्षादारम्भः[3]।

७. समानं विश्वजिच्छिल्पेन।

८. यदि पूर्वकारिणो गवामयने ब्राह्मणाच्छंसिने तदीयाय-शस्त्राय प्राग्विषुवत ऐन्द्रेषु प्रगाथेषु अभीवर्ताख्यमन्वायातयेयुस्ततो ब्राह्मणाच्छंसिनो यो विशेषः स उच्यते। यस्मिन् स्तुवते छन्दोगाः स एव स्तोत्रियः कार्यः श्वःस्तोत्रियो ऽनुरूपः कार्यः[4]। न षष्ठे[5] ऽन्वायातनं तत्र स्तोत्रियानुरूपाणां प्रत्यक्षमिष्टत्वात्। एकान्नविंश-तेरेवाह्नामन्वायातनम् तत्र चतुरुत्तरं शतं प्रगाथानामैन्द्रा[6] बार्हताः प्रगाथा द्वादशयोर्व्विति छन्दोगानाम्।

त्वमङ्गैकस्ततः[7] सत्र त्वामिद्धि हवामहे।
पयोदश च मो षु त्वा तृतीयां त्वत उद्धरेत्॥
उदु त्यद्दर्शतं लेको द्वौ तु मा चिदिति स्मृतौ।
पिबा सुतस्येति दश यदिन्द्र प्रागपाक्तथ॥
वास्तोष्पते ध्रुवेत्येको न हि ते शूर चापरः।
न भागे[8] द्वितीये तु तरोभिर्वो विदद्वसु॥

---

१ A सर्वभावार्थे। २ CD न्यायः। ३ A शौनल्लात् CD शौचवृक्षात् M शौच०। ४ CD कर्तव्य। ५ A षष्ठे। CD षष्ठे। ६ M प्रगाथानामैन्द्राणां विषये। चतुः-शतमैन्द्रा०। ७ CD त्वमङ्ग प्र शंसिष इत्येक। ८ CD भाग।

यो राजेति त्रयो ज्ञेया विश्वेत्ता विष्णुरित्येकः ।
तं वो दस्मं तु पञ्च स्तुरा नो विश्वास्विति त्र्यः ॥
त्वामिदा ह्यो ऽथ चत्वारः स्वादिष्ठो वयमद्यानिति ।
सं मा तपन्ति[1] कवयो[2] विज्ञेयाः सप्तविंशतिः ॥
वालखिल्ये प्रगाथा ये षड्विंशेन विवर्जिताः ।
नकिः सुदास इत्येको द्वौ चापि बृहदिन्द्राय ।
एवं[3] मरुत्वतीयेषु न हि ते विपरीतताः[4] ॥
सूर्यदेवौ च विज्ञेयावुदु त्यं वयमहाँ अपि ।
सर्वे एते ऽपि कर्तव्या नान्यथास्ति चतुःशतम् ॥
अन्यशाखाश्रयाभावा छान्दोग्ये गणना भवेत् ।
अथर्ववेदे त्वपरे ज्ञेयाः पञ्चदशाधिकाः ॥

९. एतदपि परमतमेव । यदिवाशब्दात् कदाचिच्छन्दोगा गवामयने तत्प्रकृतिषु च संवत्सरसत्रेषु माध्विपवतः षट्प्रगाथेनेयुः । द्वादशभिरेतव्यमिति[5] छन्दोगानां वचनम् । तस्मिन्पक्षे वक्ष्यमाणाः षट्प्रगाथा अन्ये संप्रयोक्तव्याः[6] ।

१०. यदि गवामयन इत्यस्मिन्नपि कल्पे तृतीये ऽहनि बृहत्यो भवन्ति । विकल्पार्थं सूत्रम् । न चात्र शःस्तोत्रियक्रिया । बृहत्य एवानुरूपः । एवं सति पृष्ठस्यापि विकल्पेनान्यायतनम् । नित्यमभिप्लवे[7] ऽन्यायतनम् । तृतीये ऽहनि बृहतीविकल्पः ।

---

१ C मतर्यंति कवयो विज्ञेया ; in marg. भा as insertion between म and त ' D मतर्यंति कवयो वि॰ । २ A कवये । ३ C D एव । ४ C D परिताः । ५ C D एतव्यमिति । ६ M व्यत्यासे प्रयोक्तव्याः । ७ C D चाभिप्लवेन ।

चतुर्विंशे ऽभिजिति स्वरसामसु नित्यमन्वायातनम्। न प्रायणीये। प्रायणीयमतिरात्रमुपेत्येति सूत्रातिरेकात् (१३.१९.७) न च्छन्दोमेषु प्रदेशे तु नित्यमेव च।

११. तं वो दस्ममृतीषहमिति स्तोत्रियः प्रगाथः। तत्त्वा यामि सुवीर्यमित्यनुरूपः। अभि प्र वः सुराधसमिति स्तोत्रियः प्रगाथः। प्र सु श्रुतं सुराधसमित्यनुरूपः। आ त्वा सहस्रमा शत- मिति स्तोत्रियः प्रगाथः। आ मन्द्रैरिन्द्र हरिभिरित्यनुरूपः। यो राजा चर्षणीनामिति स्तोत्रियः प्रगाथः। नकिष्टं कर्मणा नश- दित्यनुरूपः। न त्वा बृहन्तो अद्रय इति स्तोत्रियः प्रगाथः। त्वमिन्द्र यशा असीत्यनुरूपः। त्वमिन्द्र प्रतूर्तिष्विति स्तोत्रियः प्रगाथः। पिबा सुतस्य रसिन इत्यनुरूपः। षडेते प्रगाथाः।

१२. विषुवति यदि च्छन्दोगा आदित्यव्रताख्यं साम कुर्युः तत उत्तमे स्वरसाम्नि विषुवतः स्तोत्रियानुरूपः कर्तव्यः।

१३. चित्रं देवानामुदगादनीकमिति स्तोत्रियः। उत्तरे पोतूर्यौ हृचदधीचीति वतीयानुरूपश्चेति (११.१२.२५.२६) तत् पूर्ववत् द्रष्टव्यमविशेषात्।

१४. विषुवति। ब्राह्मणाच्छंसिनो गवामयने यदि विकर्ण- मन्वायातयेयुः चित्रं देवानामित्यनयोरेवान्वायातयेयुः। प्रकृतत्वात्। तत्र[1] प्रस्तुतमेव ग्रहणम्।

१५. वण्महाँ असि सूर्येति स्तोत्रियः प्रगाथः। उदु त्यद्दर्शत- मित्यनुरूपः। विकर्णश्चेत्यनूच्यमाने[2] पूर्वसूत्रस्यायमर्थ इति विज्ञायते।

१ C D om. तत्र। २ A चानुच्य° C विकर्णश्च चानूच्यमाने।

१६. प्रगाथग्रहणमनुवर्तते। इन्द्र क्रतुं न आ भरेत्ययं स्तोत्रियो विकर्णस्थान्यस्य चोर्ध्वं विषुवतः। भेदेनोपदेशात्। इन्द्र ज्येष्ठं न आ भरेत्यनुरूपः।

१७. पौरुमीळ्हादीनि सामानि नामविशिष्टानि यदूर्ध्वं विषुवतो ऽभीवर्तस्थाने ऽप्यायातयेयुश्छन्दोगा इन्द्र क्रतुं न आ भरेत्यचैव कुर्युः तत्रायमेव स्तोत्रियो भवति ऊर्ध्वं विषुवतः।

---

१०.

१. होत्रकाणामिति वर्तते। उक्तो माध्यन्दिनेषु सवनेषु विकारो होत्रकाणाम्। अथेदानीमवसरप्राप्त उक्थेषु यः प्राकृताद्विकारः स उच्यते। तार्तीयसवनिकान्युक्थ्यसंस्थानि होत्रकशस्त्राण्युक्थान्युच्यन्ते। साकमश्वं मैत्रावरुणस्येत्येवमादिना सूत्रजातेन। तद्विषयो विकारः। विकारवचनादनुक्तं प्राकृतं। चतुर्थे ऽहनि ब्राह्मणाच्छंसिनः स्तोत्रियानुरूपौ प्रयोजनम्[1]।

२. अन्येषां जागतानां पचे विधानार्थं सूत्रम्। द्वितीयं नित्यवचनं नित्यपरिमाणान्येवेत्यवधारणार्थम्। तत्र प्राकृतेभ्यो ऽन्यानि वृद्धसंप्रदायानुगमादैन्द्राणि जागतानि लिख्यन्ते। एवा पतिं द्रोणसाचं सचेतसमिति मैत्रावरुणस्य द्वितीये ऽहनि वृधायव इति वृषण्वत्। तृतीये अयावति प्रथमो गोषु गच्छतीत्ययावत्। चतुर्थे जघान एव व्यबाधत स्पृध इति जातवत्। पञ्चमे अनानुदो वृषभो दोधतो वध इति वृषभवत्। अष्टमे तुभ्येदमिन्द्र परि षिच्यते

---

1. cf. ११. ११. C Comm.

मध्विति स्वर्जितं मह्यीति महद्वत्। नवमे एवेवापागपरे सन्तु दूढ्य इति द्यौः क्रन्ददिति दिव इति तदमुष्य लोकस्य रूपम्। चतुर्विंशे आदङ्गिराः प्रथमं दधिरे वय इति समविन्दन्त भोजनमिति संवत्। प्रथमे स्वरसाम्नि यो न इन्द्राभितो जन इति वृकायुरिति कद्वत्। द्वितीये स्वरसाम्नि उभे यदिन्द्र रोदसी इति तमीं शधीति कद्वत्। तृतीये स्वरसाम्नि अव यत्त्वं शतक्रतो इति कद्वत्। अथ ब्राह्मणाच्छंसिनः। ऐन्द्राणि जागतानि। प्र वः सतां ज्येष्ठतमाय सुष्टुतिमिति वृषं द्वितीये ऽहनि इन्द्रे वचं भरतीति वज्रवत्। तृतीये ऽहनि विविष्टिधातु प्रतिमानमोजस इति त्रिवत्। चतुर्थे यो नो दास आर्यो वा पुरुष्टुतेति परि कुत्सादिन्द्र मह्यीति परिवत्। पञ्चमे विश्वे ह्यस्मै यजताय धृष्णव इति वृषभायेति वृषभवत्। षष्ठमे नाना हि त्वा हवमाना जना इम इति धिषणा तित्विषे मह्यीति महद्वत्। नवमे अस्य श्रवो नद्यः सप्त बिभ्रती-त्यस्माकमंग्रमुद्वा भरेभर इति निवृत्तिः। चतुर्विंशे प्र ते नावं न समने वचस्युवमिति संबाधादिति संवत्। प्रथमे स्वरसाम्नि वेद्यान उप शृतमा इति शकराविति कद्वत्। अथाच्छावाकस्यैन्द्राणि जागतानि। द्वितीये ऽहनि अभि त्यं मेषं पुरुहूतमृग्मियमिति पयोदम इवं यदिन्द्र श्रवसावधीरहिमिति इववत्। तृतीये त्यं सु मेषं महया स्वर्विदमित्यष्टौ द्योश्चिदस्यामवां अहेः स्वनादिति च पञ्च हवनश्रुदं रथमिति रथवत्। चतुर्थे अहं भुवं वसुनः पूर्व्यस्पतिरित्येकादश। एता विश्वा सवना तूतुमा कृष इति द्वे। चिताय गा अजनयमिति आतवत्। पञ्चमे ऽयं दां गृणते पूर्व्यं वस्वित्येकादश।

प्र वो महे मन्दमानायान्धस इति च द्वे स्थाहै गवामूधःक्षिति पद्युमत् । सप्तमे तदस्मै नव्यमङ्गिरस्वदर्चतेत्यष्टौ । अनानतमनुभजरा स्वर्वतीति पञ्च मखिमानमातिरदित्यावत् । अष्टमे प्र ते महे विदथे शंसिषं हरी इति चथोदश मह इति मरुद्वत् । नवमे अर्चा दिवे बृहते शूष्यं वच इति नव दिवश्चिदस्य वरिमा वि पप्रथ इति चतस्रो दिव इति तदस्युत्य लोकस्य रूपमिति । चतुर्दिशे न्यू षु वाचं प्र महे भरामह इत्येकादश । मा नो ऽस्मिन् मघवन् पृत्स्वंहसीति द्वे । समिन्द्र राय इति संवत् । प्रथमे स्वरसाम्नि पृष्ठा प्र इन्द्रं मतयः स्वर्विद इति नव । अभी दधामीति चतस्रः । ते इत्काममिति कद्वत् । द्वितीये स्वरसाम्नि य इन्द्रवानि समिथानीति चतस्रः । एय प्र पूर्वीरिति षट् । युनज्मि ते ब्रह्मणेत्येका इमां ते धियमित्येका । मघः सु वो अरमिति चैका कृणोति युध इति कद्वत् । तृतीये स्वरसाम्नि तमस्य द्यावापृथिवी सचेतसेति द्वे । अभ्राज एवेति पञ्च । तव त्य इन्द्र सख्येषु वह्नय इति षट् । क्षयान इति कद्वत् । सप्तमे ऽहनि मैत्रावरुणस्य ब्राह्मणाच्छंसिनश्चैकाहिके । तत्रैव च यस्मात् । पृष्ठ्ये यानि तान्येवाभिप्लवे । अभिजिदिषुवद्विश्वजिन्महाव्रतेषु चातुर्विंशिकान्येव तद्विलोपदेशात् । पृष्ठ्याभिप्लवप्रथमयोर्द्व्यमे चाहान्येकाहिकानि । उत्तमे चाभिप्लविके द्वितीयात् तार्तीयकानि । यत्तदित्यारम्भात् । विश्वजिति सर्वपृष्ठे परोक्षपृष्ठे च नेदं[1] विद्यते । षष्ठे ऽहन्यभावात् । बृहत्पृष्ठपरोक्षपृष्ठेभ्य-

---

१ A नैव ।

स्त्वन्यप्रकारे[1] विश्वजिति द्वितीयादेव। उक्थविकार[2] उक्थवचनात्। अन्यस्मिन्नहनि संघातमापद्यमाने आगतविशेषः। स्तोमातिशंसने प्राकृते एतेषां लक्षामेकाहीभवतामपि[3] अहःसवनोपदेशे (१४. १. २) च सहोचं। तदित्यारम्भात्। प्रस्तानिदेशो[4] ऽपि यदा सहोचस्य प्राप्तिः।

३. उक्थेष्विति वर्तते। प्र वो वाजा अभिद्यव इति स्तोत्रियः। प्र वः सखायो अग्नय इत्यनुरूपः। गायत्रीषु मैत्रावरुणाय प्रणयन्तीति श्रुतेः। अनुरूपादनन्तरमेवा यातिं द्रोणसाचं सचेतसमिति तृचः।

४. प्र सम्राजे बृहदर्चा गभीरमिति सूक्तं। इन्द्रा को वां वरुणा सुम्नमापेति च। मैत्रावरुणग्रहणमितरयोर्निवृत्त्यर्थं। अहनि द्वितीय इति नियमार्थम्।

५. आ वां राजानावध्वरे ववृत्यामित्ययं पर्यासस्तृतीयपञ्चमयोरह्नोर्मध्यमे च छन्दोमे। न तु द्वितीये ऽहनि सूक्तं क्रमभेदात्।

६. मैत्रावरुणस्येत्यनुवर्तते[5]। पुनीषे वामरक्षसं मनीषामिति पर्यास इतरेष्वहःसु द्वितीयचतुर्थषष्ठसप्तमनवमेषु।

७. ककुप्सु मैत्रावरुणाय प्रणयन्ति तृतीये ऽहनीति श्रुतेः। अनुरूपादनन्तरो अश्वावति प्रथमो गोषु गच्छतीति तृचः।

८. धीरा त्वस्य महिना जनूंषीति सूक्तम्। इन्द्रावरुणा युवमध्वराय न इति च [6]तृतीये ऽहनि।

---

१ M ॰न्यप्र॰ C D ॰नन्यप्रकारेषि। २ M उक्थाधिकारे उक्तव।
३ A रेकाहिकीर्ले भवति मामपि C D रेकाहिकीर्ने भवतामपि चहः। सवनो (D चहः सव॰)। ४ A प्रस्तानिदेशो C प्रस्तानिदेशो D प्रस्तापि देशो।
५ om. in C D M. ६ A ins. ततः पर्यास इति।

९. गायत्रीषु मैत्रावरुणाय प्रणयन्ति चतुर्थे ऽहन्निति श्रुतेः। अनुरूपादनन्तरो मज्ञान एव व्यवाघत स्पृध इति तृचः।

१०. रदत्पथो वरुणः सूर्यायेति सूक्तम्। श्रुष्टी वां यज्ञ उद्यतः सजोषा इति च। ततः पर्यास इति चतुर्थे ऽहनि।

११. आ ते अग्न इधीमहीत्येका। सो अग्निर्यो वसुरित्येका। अग्निं तं मन्ये यो वसुरित्येका[१]। अयं क्रमः स्तोत्रियः।

१२. आ ते अग्न ऋचा हविरित्यनुरूपः। पङ्क्तिषु मैत्रावरुणाय प्रणयन्ति पञ्चमे ऽहन्निति (२०. २) श्रुतेः। अनुरूपादनन्तरो अनानुदो वृषभो दोधतो वध इति तृचः।

१३. प्र सम्राजे बृहदर्चा गभीरं ब्रह्म प्रियं वरुणाय श्रुताय। ततः पर्यास इति पञ्चमे ऽहनि।

---

१२.

१. द्विपदाः षष्ठे स्तोत्रियानुरूपतया सर्वेषां होत्रकाणां [illegible] केवलं मैत्रावरुणस्य।

२. अग्ने त्वं नो अन्तम इति स्तोत्रियो द्वैपदस्तृचो भवति मैत्रावरुणस्य।

३. आम्नायक्रमेण या चतुर्थी तां तृतीयां करोति।

४. अग्ने भव सुषमिधा समिद्ध इत्ययमनुरूपो भवति।

५. वालखिल्या ऋचो ऽभि प्र वः सुराधसमित्यष्टौ सूक्तानि।

---

१ M inserts इति।

तच्छंसनं विहारश्चेति विधीयते। स्तोत्रियानुरूपौ शस्त्वा वाल-खिल्याः शंसतीति श्रुतेः।

६. विहारो नाम अन्यदीयस्य सूक्तस्य अन्यदीयेन पादादिना संधायाधानम्[१]। तस्यानियमे प्राप्ते नियम उच्यते। पच्छः प्रथमे इत्यनेन प्रथमद्वितीये उच्येते। प्रथमद्वितीये सूक्ते पादंपादं विहरन् शंसति।

७. अर्धर्चमर्धर्चं विहरन् तृतीयचतुर्थे सूक्ते शंसति।

८. ऋचमृचं विहरन् तृतीये सूक्ते शंसति। विलापेक्षं तृतीयत्वं। पञ्चमषष्ठे इत्यर्थः।

९. उत्तमसूक्ते उत्तमोपोत्तमे सप्ताष्टमे विपर्यस्येत्[२]। अष्टमं शस्त्वा सप्तमं शंसेत्।

१०. विहृतास्वन्यथाप्येवमेव प्रतिगरणम् प्रतीचितव्य इति सूत्रारम्भः।

११. वाक्यद्वय प्रतिगरः। तत्रायं विभागविनियोगः। मोदा मोदैव मदे इत्यवसाने मोदा मोदैवो यो ३ इति शुतान्तं प्रणवे।

११. त्यमू षु वाजिनमिति तार्क्ष्यं तस्यानुवादेन शंसनं विधायोत्तमां परिशिष्येत्येवमादि विधीयते। उत्तमां सुक्तादावं करोति। ततो दूरोहणं शंसः प्रउचिषदिति। यथा विषुवति शंसनमस्यास्तथात्रापि शंसति। यथा विषुवतीत्युक्तमाहावस्य नित्यार्थम्।

१२. तार्क्ष्यः प्रकृतस्तस्योत्तमामृचमुपसंशस्य तत ऐकाहिकौ

---

१ B संधाय मानं। २ C in marg. सप्ताष्टिमयोस्ता अर्धं आवध्ने इति श्रुतेरन्यः।

तृचौ शंसति। ऐकाहिकौ प्राकृतावित्यर्थः। तौ चर्षणीधृतमस्तभ्नाद् द्यामिति।

१४. ऐकाहिकाभ्यां तृचाभ्यामनन्तरास्तिस्र ऋचोऽस्माकमत्र पितर आयचिति।

१५. इन्द्रावरुणा युवमध्वराय न इति सूक्तं शंसेत्। ततः पर्यासमिति षष्ठे इत्युपसंहरत्येतद्दर्शयति। नात्र चतुःसूक्तान्युक्थानीति नियमः।

१६. आ ते वत्सो मनो यमदिति स्तोत्रियः। आग्निरगामि भारत इत्यनुरूपः। एतौ प्रथमे छन्दोमे भवतः।

१७. पर्यासं चीणि च पूर्वाण्यैकाहिकान्यन्तरेणेमानि वां भागधेयानि सिस्रत इति पञ्च शंसेत्। युवां नरा पश्यमानास आप्यमिति पञ्चैव[1]। षट्त्रिंशतं मैत्रावरुणश्चतुर्विंशे शंसतीति (१०. १०) श्रुतेः। चतुर्विंशे शस्तं प्रथमाच्छन्दोमादित्यतिदेशः।

१८. प्रेष्ठं वो अतिथिमिति स्तोत्रियः। प्रियो नो अस्तु विश्पतिरित्यनुरूपः। मध्यमे छन्दोमे छन्दोमाधिकारात्। ततोऽनुरूपादनन्तरं आगतं तुभ्येदमिन्द्र परि षिच्यते मध्विति।

१९. भद्रो नो अग्निराहुत इति स्तोत्रियः। यदी घृतेभिराहुत इत्यनुरूपः। प्रगाथौ काकुभौ। उत्तमे छन्दोमे छन्दोमाधिकारात्।

२०. पूर्वाभ्यां सह विकल्पः। ततो आगतमेवैवापागपरे सन्तु दूढ्य इति।

---

१ A has वा instead of आप्यमिति and inserts [after पश्यमानास] चर्षणीधृतमित्यादीनि चीणि सस्त्वेमानि वामिति पञ्च युवां नरेति [illegible] पञ्च मरुत्वा पर्यासश्च शंसेदित्यर्थः।

२१. न हि ते क्षत्रं न सहो न मन्युमित्युभयोश्छन्दोमयोर्मध्यमोत्तमयोः सूक्तशेषो द्व्यर्चः ।

२२. इन्द्रा को वां वरुणा सुम्नमापेति मध्यमे छन्दोमे ।

२३. श्रुष्टी वां यज्ञ उद्यतः सजोषा इत्येतत्सूक्तमुत्तमे छन्दोमे ।

२४. इमा उ वां भृमयो मन्यमाना इति तिस्र उभयोश्छन्दोमयोः । उक्तान्युक्थानि मैत्रावरुणस्य । ब्राह्मणाच्छंसिन इदानीं वक्तव्यानि । तदर्थमाह ।

---

१२.

१. एवा ह्यसि वीरयुरिति स्तोत्रियः । एवा ह्यस्य सूनृतेत्यनुरूपः । गायत्रीषु ब्राह्मणाच्छंसिने प्रणयन्ति द्वितीये ऽहनीति श्रुतेः । अनुरूपादनन्तरं आगतं प्र वः सतां ज्येष्ठतमाय सुष्टुतिमिति । एवैवापागपरे सन्तु दूढ्या इति केचित्[1] । तद्विचार्यम् ।

२. यस्तस्तम्भ सहसा वि ज्मो अन्तानिति षड् द्वितीये ऽहनि । ब्राह्मणाच्छंसिन इत्यधिकार आ अच्छावाकसम्बन्धात् ।

३. यस्तस्तम्भेति षळुत्तरयोरपि छन्दोमयोः सूक्तानां मध्ये भवन्ति ।

४. यो अद्रिभित्प्रथमजा ऋतावेति सर्वत्र पूर्वं पर्यासाच्छंसेत् । तृचपर्यं षष्ठे चोर्ध्वं तृचेभ्य इत्यत्रोपयुज्यते ।

५. अस्तेव सु प्रतरं लायमस्यन्निति पर्यासस्तृतीयपञ्चमयोरह्नोर्मध्यमे च छन्दोमे भवति ।

---

[1] केचित् C in marg. D om.

६. अच्छा म इन्द्रं मतयः स्वर्विद इति पर्याय इतरेष्वह:सु द्वितीयचतुर्थषष्ठसप्तमनवमेषु।

७. तं ते मदं गृणीमसीति स्तोत्रियः। तमभि प्र गायतेत्यनुरूपः। उष्णिह एताः। ककुप्सु मैत्रावरुणाय प्रणयन्ति तृतीये ऽहन्येनो स ब्राह्मणाच्छंसिनो वयमेनीति (११.८) तुल्यच्छन्दसः प्रसङ्गं वयमगमनम्। अनुरूपादनन्तरमैन्द्रं जागतं। चिविष्टिधातु प्रतिमानमोजस इति केचित्। तदपि विचार्यम्।

८. अभर्वाणं वृषभं मन्द्रजिह्वमिति सूक्तं तृतीये ऽहनि भवति।

९. उदप्रुतो न वयो रक्षमाणा इति सूक्तं चतुर्थे ऽहनि भवति। स्तोत्रियानुरूपावत्र नोक्तौ उक्थेषु विकारवचनात्[१] (१२. १०. १)। प्राकृतौ वयमु त्वामपूर्व्य यो न इदमिदमिति (९. ३. २)। उष्णिक्षु ब्राह्मणाच्छंसिने प्रणयन्तीति चतुर्थे ऽहनीति श्रुतेः। उष्णिक्ककुभस्तुल्याक्षरत्वात्। अनुरूपादनन्तरमैन्द्रं जागतं। यो गो दास आर्यो वा पुरुष्टुतेति। परि कुक्षादिशा गहीति परिशत्। अपरे जज्ञान एव व्यबाधत स्पृध इति वदन्ति।

१०. उदप्रुत इत्येव।

११. प्र मंहिष्ठाय यो अद्रिभिद्व क्रुध इत्येतेभ्यः।

१२. इन्द्राय साम गायतेति स्तोत्रियः। तमभि प्र गायतेत्यनुरूपः। अनुरूपादनन्तरमैन्द्रं जागतं विश्वे ह्यस्मै यजताय धृष्णव इति।

१३. यज्ञे दिवो नृषदने पृथिव्या इति सूक्तं पञ्चमे ऽहनि मध्यमे च च्छन्दोमे यज्ञे दिव इति।

---

१ M ॰च विकार इति विकारवचन॰।

२१. न हि ते क्षत्रं न सहो न मन्युमित्युभयोश्छन्दोमयो-र्मध्यमोत्तमयोः सूक्तेभ्यो दशर्चः।

२२. इन्द्रा को वां वरुणा सुम्नमापेति मध्यमे छन्दोमे।

२३. अश्वी वां यज्ञ उद्यतः सजोषा इत्येतत्सूक्तमुत्तमे छन्दोमे।

२४. इमा उ वां भूमयो मन्यमाना इति तिस्र उभयो-श्छन्दोमयोः। उक्तान्युक्थानि मैत्रावरुणस्य। ब्राह्मणाच्छंसिन इदानीं वक्तव्यानि। तदर्थमाह।

---

## १२.

१. एवा त्वामिन्द्र वीरयुरिति स्तोत्रियः। एवा ह्यस्य सूनृते-त्यनुरूपः। गायत्रीषु ब्राह्मणाच्छंसिने प्रणयन्ति द्वितीये ऽहनीति श्रुतेः। अनुरूपादनन्तरं जागतं प्र वः सतां ज्येष्ठतमाय सुष्टुति-मिति। एवैवापरापरे यन्तु दूत्या इति केचित्[1]। तदविचार्यम्।

२. यस्तस्तम्भ सहसा वि ज्मो अन्तानिति षड् द्वितीये ऽहनि। ब्राह्मणाच्छंसिन इत्यधिकार आ अच्छावाकग्रहात्।

३. यस्तस्तम्भेति षळुत्तरयोरपि छन्दोमयोः सूक्तानां मध्ये भवन्ति।

४. यो अद्रिभित्प्रथमजा ऋतावेति सर्वत्र पूर्वं पर्यासाच्छंसेत्। द्वयग्रहणं षष्ठे चोर्ध्वे द्वयेभ्य इत्यत्रोपयुज्यते।

५. अस्तेव सु प्रतरं लायमस्यन्निति पर्यासस्तृतीयपञ्चमयोरह्नो-र्मध्यमे च छन्दोमे भवति।

---

१ केचित् C in marg. D om.

६. अच्छा म इन्द्रं मतयः स्वर्विद इति पर्याय इतरैश्चत्वारःसु द्वितीयचतुर्थषष्ठसप्तमनवमेषु।

७. तं ते मदं गृणीमसीति स्तोत्रियः। तम्वभि प्र गायतेत्यनुरूपः। उष्णिह एताः। ककुप्सु मैत्रावरुणाय प्रणयन्ति तृतीये ऽहंसेनो स ब्राह्मणाच्छंसिनो वयमेनमिति (१०.९) तुल्यच्छन्दसः प्रसंगं बयगमनम्। अनुरूपादनन्तरमैन्द्रं जागतं। त्रिविष्टिधातु प्रतिमानमोजस इति केचित्। तदपि विचार्यम्।

८. अमर्वाणं वृषभं मन्द्रजिह्वमिति सूक्तं तृतीये ऽहनि भवति।

९. उदप्रुतो न वयो रक्षमाणा इति सूक्तं चतुर्थे ऽहनि भवति। स्तोत्रियानुरूपावस्य नोक्तौ उक्थ्येषु विकारवचनात्[1] (११. १०. १)। प्राकृतौ वयमु त्वामपूर्व्यं यो न इदमिदमिति (९. ३. २)। उष्णिहु ब्राह्मणाच्छंसिने प्रणयन्तीति चतुर्थे ऽहनीति श्रुतेः। उष्णिक्ककुभ-मुख्याचरत्वात्। अनुरूपादनन्तरमैन्द्रं जागतं। यो नो दास आर्यो वा पुरुष्टुतेति। परि कुक्षादिश गहीति परिवत्। अपरे जग्मान एव ब्बाधत स्पृध इति वदन्ति।

१०. उदप्रुत इत्येव।

११. प्र मंहिष्ठाय यो अद्रिभिद्व ऋषा इत्येतेभ्यः।

१२. इन्द्राय साम गायतेति स्तोत्रियः। तम्वभि प्र गायतेत्यनुरूपः। अनुरूपादनन्तरमैन्द्रं जागतं विषे ह्यस्मै यवताय पृष्णव इति।

१३. यस्ते दिवो नृषदने पृथिव्या इति सूक्तं पञ्चमे ऽहनि मध्यमे त्र च्छन्दोमे यस्ते दिव इति।

[1] १. M. ०व विकार इति विकारवचन०।

१४. इमा नु कं भुवना सीषधामेति द्वैपदः स्तोत्रियः कार्यः।

१५. तृतीयमनुरूपतृचः। इमा नु कमिति द्वैपदस्य तृचस्योत्तरे द्वे अया वाजं देवहितं सनेमेति तृतीयानुरूपस्य कार्या।

---

## १३.

१. अथ प्राच इन्द्र विश्वो वनिषानिति सूक्तं सुकीर्तिसंज्ञितं शस्त्वा षड्विंशं वृषाकपिं शंसेत्। वृषाकपिर्नाम वि हि सोतोरसृक्षतेति सूक्तमृषिनाम्ना निर्दिश्यते। तं षड्विंशं न्यूङ्खयति। कथमित्याह। मध्यमस्य पादस्य द्वितीयोत्तमयोरक्षरयोर्न्यूङ्खं विशेषयन्नाह।

२. वैराजः पूर्वस्मिन्निति। वैराज उभयस्वरूपस्तुर्य ऽक्षरि। स पूर्वस्मिन् न्यूङ्खस्थाने द्वितीये ऽक्षर इत्यर्थः[1]। द्वितीयस्थाने[2] स्वरूपं उदाहरत्यन्यथापि व्यञ्जनान्ते सन्धिविशेषज्ञापनार्थं। मदहृषाकपो ३ ओ ३[3] अर्यः पुष्टेषु मत्सखेत्युत्तरस्मिन्निति पूर्वाभिप्रायम्।

३. प्रतिमृष्टानि यावत्तावत्प्लावते शंसिता। तदुभयमुदाहरति।

४. वैराजं द्वादशौकारं न्यूङ्खमुक्त्वा ततो मदेय मदैवो ओ ओया मोदैव एवं प्रतिमृष्टानि।

५. तदिति वाक्योपादाने। यत्र शाखान्तरीयमहः[4] सर्वाह-न्यूङ्खपदे उपद्रुतसन्धियुक्तमक्षरं तस्मात् यथा चतुर्थमहस्तैत्तिरीयाणां

---

१ M om. द्वितीये ऽक्षर इत्यर्थः द्वितीये स्थाने। २ A द्वितीये। ३ C D कपो ओ ओ; see, h. कपो ३ ओ ओ ३। ४ B M D सर्वाहन्यू A सर्वाहन्यू।

सर्वन्यूङ्खम्। उपद्रुतो नाम सन्धिर्बाष्कलानां प्रसिद्धस्तस्योदाहरणं। न घ्नते आन्तस्य सख्याय देवा इति। अभिनिहित उक्तः सन्धिः प्रातिशाख्ये। अथाभिनिहितः सन्धिरित्येवमादिना ग्रन्थेन (२. १३)। तस्योदाहरणं। परे ऽवर उभया अमित्रा इति संपत्ते प्रयोगः। प्रश्लिष्ट उक्तः। समानाक्षरे सस्थान (२. ६) इत्येवमादिना ग्रन्थेन प्रातिशाख्ये प्रतिपादितः। तस्योदाहरणं। माघेषवो ऽवीरता परि त्वेति। अथ क्षिप्रसन्धिः। समानाक्षरमन्तःस्थां (८) स्वामित्येवमादिना[1]। तस्योदाहरणं। स्वश्वासः सुचेतुनेति प्रगाथे[2]। सन्धिवचनं कृत्रिमस्वाभाविकयोरुभयोर्ग्रहणार्थं। न्यूङ्खनीयस्य पादस्यादाविति[3] न मध्ये। उपातीत्यातिक्रम्य तदुपद्रुतादिसन्धियुक्तं। द्वितीये प्रदर्शनार्थं द्वितीयवचनं। हर्यश्वाद्रिरित्युदाहरणं[4] ज्ञापकं। य्वा ण्वो३ इति क्षिप्रस्योदाहरणम्। क स्वो इति स्वाभाविकस्य प्रदर्शनार्थम्[5]। कृत्रिमस्योदाहरणस्य द्वित्वं तु विशेषणार्थम्। ततस्तृतीये ऽध्यक्षरे सन्ध्ये एव[6] (?)। यस्येदमप्यमिति। यथा त्वं देव मघवन्नः सुपूद इति बाष्कलिकायां[7] लक्षणसुक्तं[8] तस्य परिहरणार्थम् संनिपातसन्धियोगयोः सन्धिं[9] न्यूङ्खेदिति ततो ऽच दकारे न्यूङ्खः स्यात्। शौनकेन

---

१ A ins. उक्तः। २ A प्रगाथः। ३ C (orig.) D पादस्येत्यादाविति। ४ C D ॰हरण॰। ५ A ॰दर्शनार्थं। द्वित्वं तु मध्यमस्य पादस्य द्वितीयान्तयोरिति (१०. ५. १०) विदं द्वितीये ऽक्षरे इति पुनर्द्वित्वं तु कृत्रिमस्य विशेषणार्थं। तेन यावस्य यस्येदमित्यादौ तृतीयस्यापि सन्धिं कृत्वा द्वितीयत्वं संपाद्य तत्र च(?) न्यूङ्खयेत् त्वं देवेत्यत्र तु लक्षणान्तरात् त्वं देव इति यदाभाव इति दकार एव द्वितीयं इति फलितो ऽर्थः विशेषणार्थम्। ततस्तृतीये ऽक्षरे सन्ध्ये एव न्यूङ्खयेत्। यस्येद॰। ६ C D सन्ध्येव। ७ A C D बाष्कलिकायां M बाष्कलिकायस्तु C in marg. ॰कायां। ८ C D लक्षणसुक्तस्य। ९ C D संधिं न्यूङ्खेदिति।

स्वविशेषेण न्यूङ्खस्य उक्तत्वात् वकारे प्राप्नोति[1] तच्च न युक्तं क स्यो इत्युदाहृतत्वात् ।

६. अथ यत्र स्यादिति ब्रुवन् कचिच्छाखान्तरे पञ्चालपदवृत्त्याख्या विवृत्तिर्नास्तीति ज्ञापयति। तथा च मो इत्युदाहरणपाठः। शाकलाभिप्रायेण विवृत्तिप्रत्यये विवृत्तेः प्रत्युदाहरणं[2] ये अस्या आचरणेषु दधिरे इत्यकारे न्यूङ्खः। ननु अकार एवात्र द्वितीयः तत्रैव न्यूङ्खेन भवितव्यं। किमर्थं सूत्रमेतत्। उच्यते। सूत्रारम्भादेवं[3] ज्ञायते। सन्ध्यक्षराणामपि न्यूङ्खने[4] पादे विकर्षो भवति। तेन एकार एव द्विधाकृते तृतीये भागे न्यूङ्खः प्राप्नोति। स मा भूदिति विवृत्तिप्रत्यये न्यूङ्खयेदित्युक्तं। यस्येदमर्थं हविः पदायुक्तमनेत्युभयोः पदयोः सन्धिं कृत्वा न्यूङ्खः स्या श्वो इत्युदाहरणतुल्यत्वात्। मुष्को श्वो इदस्या यवस इत्यकृत्वा[5] सन्धिं उपद्रुतादिपरिसंख्यानात्। विश्वस्याविति सानुनासिकेन[6] प्रत्यादानं पराङ्गत्वात्[7]। प्र श्रो श्रो श्रो श्रो३ श्रो श्रो श्रो श्रो३ श्रो श्रो श्रो श्रो३ धीयेति रेफस्वरभक्तिद्वकारेण पराङ्गपत्वे न लोपः। विष्णो श्रो श्रो श्रो३ इत्येवमादिषु तु लोप[8] एव पराङ्गत्वात्[9]।

७. तं इष्टाकर्पिं ग्रस्ता कुन्तापं शंसति। तमिति साहचर्यार्थम्।

---

१ C D ॰भिप्राप्नोति। २ A ॰प्रत्यये हस्ते यथुंद॰ M परे उदा॰। ३ A ॰भादेत-सतदन्तारीतिम्। ४ A न्यूने। ५ C D त्वा न सन्धिं। ६ A सानुनासिकेन। ७ C D M पराङ्गत्वात्। ८ C D लुबोप M पक्षो॰। ९ C D M पदाङ्गत्वात् C (in marg.) प्रत्यादानं पराङ्गत्वा देव प्र श्रो श्रो श्रो३ धीयेति कारः क्रमशः पूर्वोच्चरस्य '' तस्य लोप॰।

## १४. १५.

Without commentary.

## १६.

१. उक्तानां च तिस्रो नाराशंस्यः। ततस्तिस्रो रैभ्यः ततः कारव्यास्तिस्र एव। ततस्तिस्र इन्द्रगाथास्तिसृष्वानन्तरा भूतेच्छदः।

२.[1] शस्त्वा ततोऽनन्तरं वक्ष्यमाणाश्चतस्रः पारिक्षित्यस्तासां तृतीये पादे प्रथमचतुर्थयोरक्षरयोर्वैस्वर्यं कुर्यात्। उदात्तानुदात्तस्वरितप्रचितानां स्वरान्तरैः।

---

## १७.

१. एताश्चतस्रः पारिक्षित्यः।

२. वैस्वर्यानन्तरमेव प्रतिष्ठणातीत्यर्थः[2]।

३. पारिक्षितीः शस्त्वा तत एतशप्रलापो वक्ष्यमाणो विंशतिपदः। तमेतशप्रलापं निविच्छंसं शंसति।

---

## १८.

१. इत्येतशप्रलापः।

---

## १९.

१. षट्पदेयं तस्यां द्वाभ्यांद्वाभ्यामवसाय द्वाभ्यां प्रणौति।

२. त्रिष्टुबेषा।

---

१ M inserts भूतेच्छदः। २ M ०मनन्तरे स्वसाम इत्यर्थः।

३. पङ्क्तिरियं द्वाभ्यामवसायद्वाभ्यामवसायैकेन प्रणौति।

४. इयं गायत्री।

५. इत्येतास्तस्य आदित्या अङ्गिरसः।

६. एवाह जरितरोथा मोदैवेत्यवसाने तथा च जरितरोथा मोदैवेति प्रणवे भुताज्जतान्येषां पाठात्[१]। अन्ये तु प्रकृतिदृष्टत्वात्[२] भुतं न पठन्ति।

२०.

१. दिश्यां क्लृप्तीः शंसतीति श्रुतेः।

२. एताः पञ्च दिश्यां क्लृप्तयः संज्ञया।

२१.

१. जनकल्पाः शंसतीति श्रुतेः। पञ्चेति संदेहव्युदासार्थम्। अत इति क्रमार्थम्।

२. एता जनकल्पाख्याः।

३. पतस्रः प्रवल्हिकासंज्ञा अतस्त्रयस्य प्रतीराधा अनन्तरं[१] प्रतिविष्कंसं शंसेत्।

१ M कुताज्ञातान्ये०। २ C प्रकृतिदृष्टे D प्रकृतिदृष्टं (?)।
१ C D अवमानकेनान्तरं।

२२.

No commentary.[१]

२३[२].

१. इति चतस्रः प्रवह्लिकाः।

२. एतास्तिस्रः प्रतीराधाः।

३. अलाबूनि जरितरित्येवमादीनामेकैकस्याः नित्यं प्रतिगरं ओथा मोदैव इति ब्रूयात्। अध्वर्युः प्रतीचितव्यः।

४. इयमतीवादा। प्रवह्लिकाः प्रतीराधामतीवादामाहनस्या इति श्रुतौ संज्ञाकरणात्।

५. पत्नी यियस्यमाना[३] जरितरोथामोदैवेत्यवधाने। होता विद्धी मे जरितरोथा मोदैवेति प्रणवे एवमस्यामतीवादायां प्रतिगृणन्तं प्रतीचेत।

---

२४.

१. अतीवादाया अनन्तरं वक्ष्यमाणा दशाहनस्यासंज्ञाः शंसति।

२. अष्टौ एताः। ता वा अष्टौ भवन्तीति श्रुतेः।

३. कपृन्नरः कपृथमुद्दधातन। यद्ध प्राचीरजगन्तेति द्वे इति श्रुतेः। एवमेताः पूर्वाभिरष्टभिः सह दश।

४. तासामाहनस्यानां तृतीये पादे न्यूङ्खः कर्तव्यो यथा वृषाकपावुक्तः।

---

१ vers 7 is left out in all MSS. २ C (in marg.) कश्चिद्यमेधादौ कुर्यायभिमेथनमध्वर्युप्रत्ययाद्वदा तदर्थमिह पाठः। ३ C ययस्या०।

५. कपृन्नरः कपृथमुद्दधातनेत्येतस्या द्वितीयद्यमयोरन्तरयोर्यथा वृषाकपौ तथा न्यूङ्खः कर्तव्यः।

६. इतरासामाह्वनस्थानां द्वितीये ऽर्धर्चे वैराजन्यूङ्खमुक्त्वा तृतीयस्य पादस्यान्ते आनुष्टुभेन न्यूङ्खेनावसाय तत उपरितनं पादं शंसेत्। चतुर्थः पादः संतानायोत्तरस्या चयः कर्तव्यः[1]।

७. अथ प्रतिगरे विप्रश्नतयः[2] चय इकारा हृस्वाश्चतुर्थः प्लुतः। एवमपरौ द्वौ चतुष्कौ। ततः किमयमिदमाशो मो मोथा मोदैवेति प्रतिगृणाति।

---

२५.

१. आह्वनस्थानन्तरं दधिक्राव्णो अकारिषमित्येकां शंसेत्। दाधिक्रीं शंसतीति (३०. ८) श्रुतेः। एकाग्रहणं वृषाग्रहानिरासार्थम्।

२. सुताशो मधुमत्तमा इति तृचं। प्र मंहिष्ठाय बृहते बृहद्रय इति तृचं। यो अद्रिभित् प्रथमजा ऋतावेति तृचं। अव द्रप्सो अंशुमतीमतिष्ठदिति तृचं। एतानि[3] पूर्वं च यदुक्तमिमा नु कमित्यारभ्य एतत्षष्ठं भवति।

३. त्वं न इन्द्रा भरेति स्तोत्रियः। तदिन्द्राव आ भरेत्यनुरूपः।

४. स्तोत्रियानुरूपादनन्तरं प्र मंहिष्ठाय बृहते बृहद्रय इत्येतदेव पञ्चर्चं सूक्तमैन्द्रं आगतं भवति। न विकल्पो ऽन्येन सह। प्र

---

१ C D चथोचर्तव्यः M चथथर्तव्यः। २ C D om. अथ प्रतिगरे विप्रश्नतयः। ३ M ins. तृचानि।

मंहिष्ठाय दक्षते दक्षद्य इति पक्षषं विस्तावद्यावन्मैत्रावरुणस्येति (२०.८) श्रुतिवचनमेवंविषयमेव।

५. यो अद्रिभित्प्रथमजा ऋतावेत्येका शस्यते। सा चाच्छावाकस्य स्थाने गण्यते। चत्वारि सूक्तानि ब्राह्मणाच्छंसी शंसति प्रथमे छन्दोम इति श्रुतेः।

६. एन्द्र नो गधि प्रिय इति स्तोत्रियः। एदु मध्वो मदिन्तरमित्यनुरूपः। मध्यमे छन्दोमे छन्दोमाधिकारात्। अनुरूपादनन्तरं आगतं ऐन्द्रं। नाना हि त्वा हवमाना जना इम इति। अमाचं त्वा धिषणा तित्विषे महीति मरुद्वत्। शेषं पुरस्तादुक्तं यस्तस्तम्भेत्यादि।

७. उष्णिक्षु ब्राह्मणाच्छंसिन इति श्रुतेः। प्रायण्यादित्यमनसः[1]। एतो न्विन्द्रं स्तवाम सखाय इति स्तोत्रियः। सखाय आ शिषामहीत्यनुरूपः। उत्तमे छन्दोमे छन्दोमाधिकारात्। अनुरूपादनन्तरमैन्द्रं आगतं। अस्य श्रवो नद्यः सप्त बिभ्रतीत्यस्याकमंग-सुद्दशा भरेभर इति निहवितः। शेषमुक्तम्।

---

२६.

१. इन्द्रं विश्वा अवीवृधन्निति स्तोत्रियः। इन्द्रमीशानमोजसेत्यनुरूपस्य प्रथमा। ये पूर्वे अग्यास्तवाद्यं शूरेत्येते[2] ते उत्तरे भवतो द्वितीये ऽहनि[3]। एवमयं तृचः। अग्निं दूतमित्याग्नेयत्वाद-

1 M ०स्याव दै॰ C D om. प्रायण्यादित्यमनसः। 2 C D M om. सवादं शूरेत्येते।
3 C D M om. द्वितीये ऽहनि C (orig.) M भवत एव न।

नन्तरस्य। अनुरूपादनन्तरमैन्द्रं आगतं। अभि त्वं मेषं पुरुहूत-मृग्मियमिति पर्योदश। त्वं यदिन्द्र यवसा वधीरहिमिति वृत्रवत्।

२. नू मर्तो दयते सनिष्यन्नित्येतत्सूक्तमच्छावाकस्यैन्द्रादनन्तरं द्वितीयचतुर्थयोरह्नोः प्रथमोत्तमयोश्च च्छन्दोमयोः प्रथमम्।

३. विष्णोर्नु कं वीर्याणि प्र वोचमित्येतत्सूक्तमच्छावाकस्यैन्द्रा-दनन्तरं तृतीयपञ्चमाष्टमेषु[१]।

४. उरुं यज्ञाय चक्रथुरु लोकमित्येतत्तृचं पर्यासात्पूर्वं भवति सर्वेष्वहःसु। सर्वग्रहणमितरेषु इत्यस्यास्तुप्तिर्मा भूत्[२]।

५. सं वां कर्मणा समिषा हिनोमीत्येष सर्वदाच्छावाकस्य पर्यासो भवति। अत्र सर्वदाग्रहणादुर्वं यज्ञायेत्यस्य कश्चिदपंसन-मपि। तथा च षष्ठे ऽहनि परो मात्रयेत्यत्र विनियुक्तस्य न पुनः-शंसनम्।

६. अध्री त्वं तिरश्चा इति स्तोत्रियः। आमुत्करे अध्री इवमित्यनुरूपस्तृतीये ऽहनि। अनुरूपादनन्तरमैन्द्रं आगतं त्वं स्तु मेषं महया स्वर्विदमित्यष्टौ। यौ चिदवामवा अहेः खनादिति पञ्च। इवनश्चदं रथमिति रथवत्।

७. इममिन्द्र सुतं पिबेति स्तोत्रियः। पिबा सोमं मदाय कमित्यनुरूपः चतुर्थे ऽहनि। अनुरूपादनन्तरमैन्द्रं आगतं। अयं भुवं वसुनः पूर्व्यस्पतिरेकादश। एता विश्वा सवना तूतुमा कृष इति द्वे। चिताय गा अजनयमिति जातवत्।

१ C D ॰ष्टकेषु। २ C D M om. इत्यस्यानुप्तिः। ३ A M षष्ठ॰।

८. असावि सोम इन्द्र त इति स्तोत्रियः। इममिन्द्र सुतं पिबेत्यनुरूपः पञ्चमे ऽहनि। अनुरूपादनन्तरमैन्द्रं जागतं। अहं दां गृणते पूर्व्यं वस्वित्येकादश। प्र वो महे मन्दमानायान्धस इति द्वे स्वाहैँ गवामुधःस्विति पञ्चमत्।

९. प्र व इन्द्राय बृहस्तमायेत्यारण्यकपठितः स्तोत्रियः। अनुरूपो विश्वतोदावन्विश्वतो न आ भरेति षष्ठे ऽहनि। षष्ठग्रहणमुपरिष्टादिह चोच्यमानमतिरिच्यते। तस्य प्रयोजनं[1] इन्द्रमीशानमोजसेति द्वितीय एवाहनि (२९. १)। अनारभ्यवादाशङ्का च न[2] कार्या। सर्वेष्वहःसु स्तोत्रियानुरूपविधानात्।

१०. एवयामरुत्[3] प्र वो महे इति यथा वृषाकपिनैव शस्त्वा ततो ऽनन्तरं। यथा वृषाकपिमिति मध्यमस्य पादस्येत्येवमादयतिदिश्यते (१३. १)।

११. इह महो ओ ओ ओ३[4] ओ ओ ओ ओ३ ओ ओ ओ ओ३ महे मधोर्मदस्य मदिरस्य मदैवो ओ ओथा मोदैव एवं प्रतिगरणात्यध्वर्युः प्रतीचितव्यः।

१२. ऋतुर्जनित्री तस्या अपस्परीति सूक्तमेवयामरुतो ऽनन्तरं शंसेत्।

१३. नमस्य द्यावापृथिवी सचेतसेति सूक्तमृतुर्जनित्रीयानन्तरं शंसेत्।

---

1 A ins इन्द्रं विया। 2 M तु। 3 A om. एवयामरुतं।
4 C adds one ओ more.

१४. विष्णोर्नु कं वीर्याणि प्र वोचमिति सूक्तं तमस्य द्यावापृथिवी इति शस्त्वा ।

१५. प्र वः पान्तमन्धसो धिया यत इति सूक्तं विष्णोर्नुकीयादनन्तरं शंसेत् ।

१६. प्र वः पान्तमन्धस इत्येतत्सूक्तं छन्दोमेषु च शस्यते न केवलमत्र ।

१७. प्र वः पान्तमन्धस इत्येतस्य तिस्रः शंसेत् प्रथमे छन्दोमे । तुशब्दो नियमार्थः । ततो न सूक्तं विकल्प्यते ।

१८. उरुं यज्ञायेत्यस्यानृचात्पूर्वं भवामित्रीयमुत्तरयोश्छन्दोमयोर्भवति । तत्रैव नोच्यते । षष्ठे ऽप्यहनि भवामित्रीयं कथं नाम स्यादिति । तत्र शाखान्तरादिकल्पेन प्रकरणपाठस्य[1] कारणाद्विशापि सूचितमेव ।

१९. नू मर्तो दयते सनिष्यन्निति सूक्तं । परो मात्रया तन्वा वृधानेति सूक्तं उत्तमामृचमुद्धृत्य शस्यते । उरुं यज्ञायेत्यस्य सूक्तस्य[2] शंसनं कृत्वा न पुनरिति (26.5 Comm.)। षष्ठ इत्युपसंहारात् विष्णोर्नु कमितीतरेष्वित्यस्य[3] विशेषेणाप्युक्तं[4] भवति । ननु[5] भवत्येव नू मर्तः परो मात्रयेति । [6]सत्यम् । चोदनाक्रमेणानुरूपादनन्तरं पुनर्मा[7] भूत् ।

---

१ C D ०पाठाकरणात्वे०; C in marg. स्य । M पाठाच । २ A कयस्य परो मात्रयेत्यस्य सूक्तस्य । ३ A ०रेष्वेत्यवि०, B रेष्वित्यस्य वि० । ४ A ०प्युक्तं चामतं च । ५ A न ननु । ६ A मात्रयेति नू मर्तोऽसन्निन् यदि कुतो विष्णोर्नु कमिति चेत् । सत्यम् । ७ A पुनर्विष्णोर्नु कमिति मा भूत् । पर्यायस्तु भवति यदायतनात् स्तुतपर्यायो शीलाकरति भवेत् ।

२०. यदिन्द्र चित्र मेहनेति स्तोत्रियः। यदिन्द्र ते चतस्र इति अनुरूपः। प्रथमे छन्दोमे। अनुरूपादनन्तरमैन्द्रं जागतं। तदस्मै नव्यमङ्गिरस्वदर्चतेत्यष्टौ। अजातशत्रुमजरा स्वर्वतीति पञ्च। ओजो मिमानो मंहिमानमतिरदित्यावम्।

२१. पुरां भिन्दुर्युवा कविरिति स्तोत्रियः। अस्यैव यः पूर्वतृचः सो ऽनुरूपः। तृतीया तु प्रथमा। उत्तरयोरान्नायकमः। मध्यम इति मध्यमे छन्दोमे छन्दोमाधिकारात्। अनुरूपादनन्तरमैन्द्रं जागतं। प्र ते मह्ने विदथे शंसिषं हरी इति चयोदश। मह इति मतद्वत्।

२२. गायन्ति त्वा गायत्रिण इति स्तोत्रियः। अनन्तर एवानुरूपः। उत्तमे छन्दोमे छन्दोमाधिकारात्। अनुरूपादनन्तरमैन्द्रं जागतं। अर्चा दिवे बृहते शूष्यं वच इति नव। दिवश्चिदस्य वरिमा वि पप्रथ इति चतस्रः। दिव इति तदमुष्य लोकस्य रूपम्।

---

## २७.

१. उक्थेषु विकार इत्यनुवर्तते। द्वितीयप्रभृतीनां पञ्चानां षाष्ठिकानां छन्दोमानां चोपदिष्टान्युक्थानि। तान्येवैतरेषामुपदिश्यन्ते। चतुर्विंशे ऽहनि प्रथमात् छन्दोमाच्छस्त्रं सर्वेषां होत्रकाणां भवति। षट्‌त्रिंशतं मैत्रावरुणश्चतुर्विंशे शंसति चत्वारिंशतं ब्राह्म-

पाच्छंसी चतुश्चत्वारिंशतमच्छावाक इति (३०.१०) लिङ्गात्। प्रस्तवग्रहणात्सकल्पानि स्तोत्रियानुरूपौ चानुवृत्तेः[1]। सर्वग्रहणमच्छावाकाधिकारनिवृत्त्यर्थम्।

२. यच्चतुर्णां द्वितीयप्रभृतीनां पार्ष्टिकानां शस्त्रं तदवशिष्टं चतुर्णामाभिप्लविकानां द्वितीयप्रभृतीनाम्।

३. तृतीयप्रभृतिभ्यः पार्ष्टिकेभ्यः स्वरसामसु यथासङ्ख्येन शस्त्रम्।

४. अभिजिदादीनि यदि परमतेनोक्थ्यसंस्थान्यहानि कुर्युस्तत्रस्तात्तुर्विंशिकानि सहेन्द्रेभ्यः आगतेभ्यः सकल्पान्येवोक्थ्यानि कार्याणि। अन्यसंस्थेषूक्थ्यवत्सु न्यायकल्पितानि। नकाह्निकान्युत्तरचैकाह्निकवचनात्। न्यायकल्पे वृद्धसंप्रदायो लिख्यते। जागतविशेषपर्यासवैष्णवविपर्यासः[2]। वैष्णवे विपर्यासो[3] योऽग्निर्भीयोर्वयज्ञायज्ञियस्थानि[4] चतुःसूक्तान्येव। आगतपर्यासयोर्मध्ये मैत्रावरुणस्य मध्यमे द्वे आगते। ब्राह्मणाच्छंसिन उदगुतीयं योऽग्निर्भीयात् पूर्वं। अच्छावाकस्य न्यायक्लृप्तमेव महाव्रतीयमहरिति वा। अहर्वचनस्य कृत्स्नार्थस्य पुरुषमेधीयमध्यमे प्रतिषेधार्थं आरम्भः। स हि षोडशिसंस्थो दिवसः संज्ञापकस्थापितत्वात्। अन्यसंस्थस्य न्यायकल्पनात्।

५. अथ यदीति वचनात् अत्रापि परमतमेव। ऐकाह्निकान्येव न न्यायक्लृप्तानि। प्राक्षेषु पुनर्वचनात्।

---

१ C D ०कल्पावनुरूपौ। २ A वैष्णवपर्यासः। ३ C विपर्यासो M विपर्ययो। ४ C (orig.) ०स्थानि H ०संस्थानि।

६. ततो ऽप यदीत्यनुवर्तत एव। अथ यद्युत्तममाभिप्लविकमुक्थ्यं कुर्युः ततो द्वितीयस्याह्नः पार्ष्ठिकस्य यत् तृतीयसवनं होत्रकाणां होतुश्चोक्तं तदुत्तमस्याभिप्लविकस्य भवति। द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारस्तदाचरणं चायुष्यमिति।

इति शाङ्खायनश्रौतसूत्रभाष्ये द्वादशो ऽध्यायः समाप्तः।

# अथ त्रयोदशो ऽध्यायः।

१.

१. अभिजिदादयो ऽग्निष्टोमाः स्वश्रुतावुक्तास्तेषां स्वश्रुतिं परित्यज्य किमर्थमुक्थ्यान्युपदिष्टानीति। अत इदमाह। पूर्वकारिणश्छन्दोगा अध्वर्यवः। उत्तरकारिणो बह्वृचा इत्यर्थाद्गम्यते। न हि यज्ञपद्यं[1] स्तोमस्तवनं च शस्त्रमन्तरेण परिसमाप्यते श्रुतेर्न्यायाच्च।

२. एवं तावदुपदिष्टं युज्यते कर्तुं। यदि पुनस्ते छन्दोगाध्वर्यवो ऽस्वश्रुतिकत्वादनुपदिष्टं कुर्युस्ततः कथमिति। उक्त एव न्यायो यथाश्रुतमनुष्ठेयं 'कल्पशस्त्रैरप्युत्तरकारिभिर्भवितव्यं[2]। शाखान्तरविहिते तदा कल्प्यं[3] वा स्यात्। सूत्रारम्भयत्नात्। अथोदाहरणं। यदि त्रिकद्रुकीयास्त्वष्टाचत्वारिंशेन स्तुवत तदा रात्रिपर्यायं च शंसति असंलोपाय ऐन्द्री त्रिष्टुब्भवति। याज्या पिबा सोमं मदत इन्द्रियायेत्युत्तरा वा महती भवति। यानि चोक्तमस्य छान्दोमिकस्य[5] निष्केवल्यसूक्तानि तानि वा शंसेत् अष्टाचत्वारिंशस्तोमसामान्यात्। पूर्वैव तु याज्या। यदोक्तममतिरिक्तं तदा कुर्युरिति भारद्वाजकानां। तथाश्विनीभिः स्तोममतिशंसेदाश्विनीयाज्या जगत्यस्तु कर्तव्याः। सवनच्छन्दोवशात्। तत्र त्रिषु षष्टिशतेषु या न प्रयुक्तास्ताः कार्याः। संभवे सहक्रियान्याय्या। आ वां रथं

१ C D om. यच्च। २ A कल्पमाशोर॰। ३ D यदि॰।
४ A ॰विहिते तदा कल्प्या वा ऽस्यात्। ५ C D om. स्य।

पुरुमायं मनोजुवमिति द्व। अयोध्यग्निर्म्न उदेति सूर्य इति चतस्रः। अश्वदिदं वयुनमो षु भूयतेति पञ्च। कः खिद्धुचो निहितो मध्ये अर्णस इत्येका। अर्वाञ्चमद्य यय्यं नृवाहणमित्येका। एष स भानुरुदियर्ति युज्यत इति षट्। यदिन्द्रेण सरथं याथो अश्विनेत्येका। उभा हि दस्रा भिषजा मयोभुवेति पञ्च। यो वां परिज्मा सुवृदश्विना रथ इति पञ्च। युञ्जुमंरथः पिप्रयो भिरश्विनेत्येका। एता वा याज्याः। अर्वाञ्चमद्य यय्यं नृवाहणमिति याज्या। उत स्या वां मधुमन्मक्षिकारपदिति वा महती।

२. दृष्टीनां ग्रन्थ्वंतादिनि[१] क्रियमाणे हविषां यागकालेण दैवते शब्दे सगुणनिर्गुणे उच्चैस्त्वांशुतायां च मन्त्रादेः शब्दस्य। एतेष्वध्वर्युमनुविदधीत। तदुक्तं सुर्यादात्मीयमुपदिष्टमप्युपेचेत। यजमानो ऽन्यो वाध्वर्यवत्वादस्य।

३. स्तोमियादिषु च्छन्दोगमनुविदधीत। उपदिष्टमप्यात्मीयं नाद्रियेत तत्प्राधान्यात्।

५. छन्दोगानुविधानस्यायमपवादः। अचोदाहरणं। सुरूपकृत्नुमूतये सुदुघामिव गोदुहे जुहुमसाइ श्रविश्रवाइ श्रविश्रवाइ श्रविश्रवाइ[२]।

६. पूर्वस्मान्नादरे[३] प्राप्ते विशेषे ऽनुविधानं। अथवा विपर्यासमनुविदध्यादेव।

७. येन तृचाभि हर्यश्च हंसीत्येवमादिको न्यूङ्खनीयः पादो

१ D ग्रन्थतानि कि॰ C in marg. एतावच्चे। तेषां परि।
१ A om. श्रवि श्रवाइ।      ३ A ॰न्नादरे।

# अथ त्रयोदशोऽध्यायः ।

१.

१. अभिजिदादयोऽग्निष्टोमाः स्वश्रुतावुक्तास्तेषां स्वश्रुतिं परित्यज्य किमर्थमुक्थ्यान्युपदिष्टानीति । अत इदमाह । पूर्वकारिणश्छन्दोगा अध्वर्यवः । उत्तरकारिणो बह्वृचा इत्यर्थाद्गम्यते । न हि ग्रहग्रहणं[1] स्तोत्रोपस्तवनं च शस्त्रमन्तरेण परिसमाप्यते श्रुतेर्न्यायाच्च ।

२. एवं तावदुपदिष्टं युज्यते कर्तुं । यदि पुनस्ते छन्दोगाध्वर्यवोऽस्वश्रुतिकल्पानुपदिष्टं कुर्युस्ततः कथमिति । उक्त एव न्यायो यथास्तुतमनुशस्तं [2]कल्पमन्त्रैरप्युत्तरकारिभिर्भवितव्यं[3] । शाखान्तरविहिते तदा कल्प्यं[4] वा स्यात् । सूत्रारम्भयत्नात् । अथोदाहरणं । यदि त्रिकद्रुकीयाश्चष्टाचत्वारिंशेन स्तुवता तदा रात्रिपरिशेषं च शंसति असंलोपाय ऐन्द्री त्रिष्टुब्भवति । याज्या पिबा सोमं मरुत इन्द्रियायेत्युत्तरा वा मरुती भवति । यानि चोत्तमस्य छान्दोमिकस्य[5] निष्केवल्यसूक्तानि तानि वा शंसेत् अष्टाचत्वारिंशस्तोमसामान्यात् । पूर्वैव तु याज्या । यदोत्तममतिरिक्तं तदा कुर्युरिति भारद्वाजकानां । तत्राग्निनीभिः स्तोममतिशंसेदाग्निनीयाज्या जगत्यस्तु कर्तव्याः । सवनश्छन्दोगवशात् । तत्र त्रिषु षष्टिशतेषु या न प्रयुक्तास्ताः कार्याः । संभवे सकृत्क्रियान्याय्या । आ वां रथं

---

१ C D om. ग्रह । २ A कल्पमात्रैर॰ । ३ D भवि॰ ।
४ A ॰विहिते तदा कल्प्या वा स्यात् । ५ C D om. स्य ।

पुरुमायं मनोजुवमिति द्वे। अबोध्यग्निर्ज्म उदेति सूर्य इति चतस्रः। अभूदिदं वयुनमो षु भूषतेति पञ्च। कः स्विद्वृचो निष्ठितो मध्ये अर्णस इत्येका। अर्वाञ्चमद्य यय्यं नृवाहणमित्येका। एष स भानुरुदियर्ति युज्यत इति षट्। यदिन्द्रेण सरथं याथो अश्विनेत्येका। उभा हि दस्रा भिषजा मयोभुवेति पञ्च। यो वां परिज्मा सुवृदश्विना रथ इति पञ्च। शुम्भुमंहसः पिप्रथो निरश्विनेत्येका। एता वा याज्याः। अर्वाञ्चमद्य यय्यं नृवाहणमिति याज्या। उत स्या वां मधुमन्मक्षिकारपदिति वा महती।

३. दृष्टीनां प्रभ्यतादिनि[1] क्रियमाणे हविषां यागक्रमेण दैवते शब्दे सगुणनिर्गुणे उच्चैस्त्वांशुतायां च मन्द्रादेः शब्दस्य। एतेष्वध्वर्युमनुविदधीत। नदुक्तं सुर्यादात्मीयमुपदिष्टमप्युपेक्षेत। यजमानो ऽन्यो वाध्वर्यवलादस्य।

४. स्तोत्रियादिषु छन्दोगमनुविदधीत। उपदिष्टमप्यात्मीयं नाद्रियेत तत्प्राधान्यात्।

५. छन्दोगानुविधानस्यायमपवादः। अथोदाहरणं। सुरूपकृत्नुमूतये सुदुघामिव गोदुहे जुहमसि यविद्यवाद यविद्यवाद यविद्यवाद[2]।

६. पूर्वेणानादरे[3] प्राप्ते विशेषे ऽनुविधानं। ऋचां विपर्यासमनुविदध्यादेव।

७. येन दृचापि वर्यश्च इंद्रोत्येवमादिको न्यूङ्खनीयः पादो

[1] B प्राश्यतानि क्रि॰ C in marg. एतावच्च। वेदां परि।
[2] A om. यवि यवाद।  [3] A ॰णादरे।

विकर्षेण पूर्येत। ततस्तस्य विकर्षस्य द्वितीयं भागं गणयित्वा न्यूङ्खनीयं संपादयेत्। तथा निरिष्टिः पुत्रमा च्यावयोतय इति। संख्यानमात्रमेव विकर्षस्यात्र विधीयते। न तु विकृष्टप्रयोगः। ननु न्यूङ्खाधिकार एवास्य विधानं युक्तं। उच्यते। इह विधानस्यैतत्प्रयोजनं न्यूङ्खनीयपादव्यतिरेकेणान्यत्र न्यूङ्खने पादे छन्दोगैर्विकृष्टे तदनुविधानाधिकारात् विकर्षप्रयोगेणापि पादपूरणं यथा स्यादिति। अस्योदाहरणं। मा नो अज्ञाता वृजना दुराध्य इति।

८. अयं च न्यूङ्खसंबन्धो विशेषः प्रसङ्गादिहोच्यते[१]। न्यूङ्खनीयात्त्वरादूर्ध्वं यानि समानि च्छन्दोमानानि तेनैव स्वरेण तुल्यं छन्दोमानं कुर्वन्ति। तदङ्गानीत्यर्थः। तानि लुप्येरन् अदर्शनं[२] तेषां कार्यमित्युक्तं भवति। व्यञ्जनग्रहणादनुस्वारस्य लोपो भवति। अस्योदाहरणं। चतुर्थे ऽहनि न्यूङ्खे मातरस्तुवाके तपूंष्यग्ने जुह्वा पतङ्गानिति।

---

## २.

१. अथ यदि पशुरानीतो ऽनुपाकृतो म्रियेतलिंगेभ्यस्तं कारयेदिति श्रुतेः। पशुलिंगेभ्य एव तत्प्रकृतत्वात्।

२. यद्युपाकृतः पशुः कम्पते तत्र आज्याहुतिं होता जुहुयात् यस्माद्भीषावेविषा इत्येवमादिना मन्त्रेण।

३. उपाकृते वाश्यमाने यस्माद्भीषावाशिष्ठास्ततो न इत्येवमादिना मन्त्रेणाज्याहुतिं जुहुयात्।

---

१ A विशेषप्र॰। २ C in marg. यथान्यथाभावस्य।

४. पलायितुं प्रवृत्ते।

५. उपाकृते पशावुपविष्टे।

६. यस्माद्भीषा संज्ञप्ता ततो नो इत्येवमादिना मन्त्रेणाज्याहुतिं जुहुयात्। उपाकृते स्वयंमृते पशौ।

७. यद्रूपः यद्देवत्यो पशुः पूर्वः। पशुशब्देऽनुवर्तमाने पुनःपशुशब्दात् शाखापशुष्वप्येतन्नैमित्तिकं न वेपमानाद्याज्याहुतयः।

८. उपाकृतस्य मृतस्यायं विनियोगो वचनात्।

---

३.

१. प्रवृत्तेषु प्रयाजेषु मृते पशौ तेनैव संस्थाप्यं कर्म। यदि त्वप्येकयैवाभिया प्रीतः स्यात्तेनैव प्रचरेयुरिति वा स्थितिरिति श्रुतेः (१८. १२)।

२. अवदाने जिह्वादौ नष्टे अनुपलभ्यमाने। दुष्टे शिष्टभक्षणायोग्ये। विमथिते। उपलभ्यमान[1] एवाप्राप्ये भ्रंशिते वाज्यं प्रतिनिदध्यात्। इति प्रतिनिधेयनियमः।

३. पूर्वसूत्रस्यैकदेशस्यायमपवादः। हृदयस्य नाशे ऽन्यमालभेत। न तु दुष्टविमथितयोः। तत्र हि आज्यं प्रतिनिधानमेव। अन्यवचनात्[2] पूर्वस्योपलक्षणं वक्तुं छागमिति। आलभेत प्रतिनिदध्यादित्यर्थः। प्रतिनिध्यधिकारादालभतिः[3] प्रतिनिध्यर्थः। अतो नाग्निप्रणयनादीनामावृत्तिः। वपापशुपुरोडाशयोर्न पुनःक्रिया

१ C ॰लभ्यमाना। २ A ॰न्यवचनात्।
३ A ॰आलभति, C D ॰भर्ति।

ष्टतत्वात्[१]। सर्वेषामवदानानां परित्यागो भारद्वाजवचनात्। अभिगोरावृत्तिः संशासनत्वात् उपप्रैषस्य च तादर्थ्यात्।[२] मनोतापर्यग्निकरणानामावृत्तिः। संनिपातात्।

४. यदीच्छेद्यजमानो ये मे पशुमध्यं मिताररत न आर्तिं माप्नुयुरिति ततः स्रुविदङ्ग यवमन्तो यवं चिदित्यनेन मन्त्रेणाग्नीध्रीये आज्याहुतिं [२]जुहुयात्। होता च कुर्यादनादिष्टमिति परिभाषितत्वात्।

५. अष्टापदीं गर्भिण्यामित्यर्थः। वशायामनूबन्ध्यायामिति विशिष्टचोदना। चोदितायामष्टापद्यां सत्यामेतद्गर्भस्य[३] वपो वपारूपं फलीकरणानां फालीकरणम्। फलीकरणा मध्यमाद्धापुष्यास्ते हि स्वविष्टान्फलीकुर्वन्ति तेषां ये फालीकरणा अवकया[४] इति प्रसिद्धास्तान्गर्भे च। इतिशब्दश्च स्वार्थे। आग्नेयेऽग्नौ अपयितेतरस्य वपाप्रधानस्विष्टकृदादेराहुतिजातस्य वषट्कारेषु वपास्पुपजुहुयात्।

---

४.

१. अनपवृत्ते यूपकर्मणि स्वरुहोमे यदि यूपविरोहणं स्यात्तस्मात् बहुरूपमनेकवर्णं पशुमालभेत। पशुबन्धं कुर्यादित्यर्थः। अहर्गणेष्वन्येऽहनि स्वरुहोमस्तथोर्ध्वं स्वरुहोमकालादिरोहणे उत्तरे पशावाम्नायानन्तम्।

---

१ A नस्त॰। २ A ins होता।
३ A एतदवयेस, C म नदयर्भेस, D म तद्भस्य। ४ D चवकया M om.

२. वपायाः पुरोडाशस्य पश्वोः पुरोऽनुवाक्ये यथासङ्ख्येन ।

३. प्र सू महे सुशरणाय मेधामिति वपाया याज्या । प्रथमभाजं यशसं वयोधामिति पुरोडाशस्य याज्या देव त्वष्टरिति पशोर्याज्या ।

---

५.

१. क्रियमाणकर्मज्ञानगोचरे देवयजनान्तर्ये विद्विषाणयोर्यजमानयोः सत्ययोरङ्गयोः संनिपातः । एककालोपनिपातः पदार्थानां । तं संसव इत्याचक्षते याज्ञिकाः ।

२. इतरापेक्षं[1] पूर्वत्वम् ।

३. याः काश्चिदाहुतीः ।

४. प्रातःसवनादावाज्याहुतीर्जुहोति संवेशायेत्येवमादिना मन्त्रेण ।

५. माध्यन्दिने सवने एतावान्मन्त्रविकारः ।

६. त्रिष्टुभे जगत्या इति नोक्तमखिलार्थं इकारस्य ।

७. इतरथाऽकारिणमध्वर्युमितरोऽध्वर्युर्हतमिच्छन्प्राजापत्याभिस्तिसृभिर्ऋग्भिः प्रातःसवने आज्याहुतीर्जुहुयात् । अस्वामिकोऽपि वधःफलवचनात्[2] ।

८. होतारं हतमिच्छन् होता माध्यन्दिने सवने प्राजापत्याभिस्तिसृभिराज्याहुतीर्जुहुयात् ।

---

१ C D ॰पेक्षं ।　　२ A वध फलं प्र वचनात् ।

९. उद्गातारं मृतमिच्छन् तृतीयसवने उद्गाता प्राजापत्याभिस्तिसृभिराज्याहुतीर्जुहुयात् ।

१०. ब्रह्माणं मृतमिच्छन् प्राजापत्याभिस्तिसृभिस्तिस्र आज्याहुतीरनुसवनं ब्रह्मा जुहुयात् ।

११. यजमानं मृतमिच्छन् प्राजापत्याभिस्तिसृभिस्तिस्र आज्याहुतीरनुसवनं यजमानो जुहुयात् ।

१२. सर्वानितरानृत्विज इतरयज्ञस्थान् मृतानिच्छन्तः सयजमानकाम् सर्वे सयजमानकाः[1] । प्राजापत्याभिस्तिसृभिस्तिस्र आज्याहुतीरनुसवनं जुहुयुः ।

१३. संसवे उभे बृहद्रथन्तरे कुर्यादिति वचनात् । संसवायज्ञाः कुर्युः ।

१४. आभीकादीनां साम्नामुपदेशः । एतेषु यस्य कयाशुभीयादीनि कथं नाम स्युरिति ।

१५. कया शुभा सवयसः सनीळा इति मरुत्वतीयं भवति । प्रक्रान्तनिवृत्त्यर्थं मरुत्वतीयादीनां ग्रहणम् ।

१६. यो जात एव प्रथमो मनस्वानिति ।

१७. ममाग्ने वर्च इति ।

१८. यदि प्रथमाः संस्थापयेयुरितरे तत उत्तरां संस्थां कुर्यात् । अग्निष्टोमे प्रक्रान्ते उक्थ्यादिकम् ।

---

1 A inserts between स and यजमानकाः the following passage: पूर्वं प्रातरनुवाकमिति संसवदोषनिवृत्त्यर्थं । प्रथमारब्धकाः सयसां वदनात् पूर्वं प्रातरनुवाकारम्भात्.प्रकृतौ विहितमर्यादान् देवाः प्रातरनुवाकारम्भं करिष्यन्तीति मत्वा ततः पूर्वमेवमहानिशि प्रातरनुवाकारम्भं कृत्वा समापनकालात् पूर्वमेव समापयेयुः ।

१९. तस्यैवाह्नो ऽभ्यासेन द्विरात्रकरणम्[1]। विशेषणानुपदेशादन्यः सोमः क्रेतव्यो ऽहरन्तरत्वात्। तत्रानुकथयाप्यायनप्रणयनानि सांनिपातिकानि कर्तव्यानि प्रतीताव्यक्तत्वात्। सोमस्यैव केवलस्य प्रणयनं। तत्राग्नेयीरप प्रियमिति चोद्धरेत्[2]। यथासवनविधि पन्नाग्नीध्रप्रणयने[3] सोमो जिगाति गातुविदित्येवमादिनां प्रावपरिधानीयायाः उद्धारः। तत्र चाग्नीध्रकमीप एव परिधानं प्राङ्मुखस्यार्थस्य परिसमाप्तत्वात्। एवमिहापि यावदर्थं कर्म। नैवाचाश्वमेधधर्मो भवति निमित्तो कर्मान्तरत्वात्। आश्विनं निर्वचनमेव समाप्त्यपेक्षितत्वात्। समिष्टयजुरन्तं च पूर्वपूर्वमपरङ्गत्वात्[4]।

२०. संस्रवधर्मरहितं प्रक्रान्तशब्दाभिधायकमहरभ्यासेनाहरन्तरं मुख्यद्रव्याभावे प्रतिनिधतुष्टये संस्रवाहनि तस्याभ्यासः तादृशस्यैवाभ्यासो न युज्यते। प्रतिनिधौ तत्कालादिति न्यायात्। तेन पूतीकैरनुष्ठीयमाने संस्रवाहनि तस्याभ्यासः सोमेनैव न पूतिकैः।

२१. वाशब्दः पक्षान्तरे। तस्यामग्निष्टोमादिकायां संकल्पितायां संस्थायां भूयसीः संकल्पितयज्ञचोदिताभ्यो बहुतरा दक्षिणा दद्यात्।

२२. स्रवन्त्यो वा विहरन्ति। स्रवन्त्य आपो नदीतडागादिस्थाः संस्रवन्त्यो विहरन्ति। विच्छिन्दन्तीत्यर्थः। वायुर्वान्तरावर्ती विहरत्याकाशस्येति वा संख्यानं भावयेत्। चकारः सर्वत्र विद्धियाणामित्यस्य प्रापणार्थः।

———

1 A C D M ०याभं क० । 2 C M वे० । 3 A यथासवनविधि० M यथा स च विधिवप०, C D यथासवनवि० । 4 C पूर्वं D om. once पूर्वं ।

६.

१. क्रीत इति विशेषणादक्रीतापहारे चोदितकालात्यातिनयनमपि[1]। सोमभावे सर्वास्ववस्थासु करिष्यमाणप्रयोजने। अपहृत इत्यपशब्दादृश्यमाने विनाप्यपहरणेन। अमेध्यसंसृष्टे[2] तु शक्ये अमेध्यापनयने शुद्धिः कार्या।

यावन्नापैत्यमेध्याक्ताद्गन्धो लेपश्च तत्कृतः।
तावन्मृद्वारि चादेयं सर्वासु द्रव्यशुद्धिषु॥ इति

सर्ववचनात्। अभिषुतेषु दुष्टे परित्यागो ऽपहृतवच्च कर्म। अन्यमाहृत्येत्यन्यस्याहरणमात्रम्। न क्रयः। अभिषुणुयादिति प्रागभिषवात्क्रीतापहृतस्य लब्धस्यापि तेन सह समुच्चयः। उभयोः संस्कृतत्वात्।

२. सोमाहरणशालिने मूल्यनिरपेक्षयापि सोमविक्रयिणे वा मूल्यार्थिने किंचिद्दद्यात्। न तु शास्त्रीयम्।

३. यजेतेति वाक्यशेषः। अभिषुणुयादिति यागचोदनानुवर्तत एव। अनुपलभ्यमाने सोमे पूतीकादीनभिषुत्य यजेत्[3]। पूतीका रोहितवर्णाश्चापि[4]। अर्जुनो ऽपि वृक्षजातिरेव। तत्पुष्पाण्यपि शुक्लानि।

४. द्रव्याणां पूर्वोक्तानां यागसाधनानामभिषुतानामयं संस्कारः। प्रतिदुहा धारेण सद्योदुग्धेन प्रातःसवने श्रीणीयात्। मिश्रयेत्। शृतेन तप्तातञ्चनेन माध्यन्दिने श्रीणीयात्। दध्ना तृतीयसवने।

---

१ All MSS कालात्या॰ or कालाया॰। २ A ॰स्पृष्टे [illegible] शक्ये।
३ A वा यजेत। ४ M रोहितव॰, C रोहितव॰ (?) D रोहित॰।

५. एका स्त्रीगौर्देया। दक्षिणाग्रहणात् प्राकृतस्य दाक्षिणस्य निवृत्तिः। अवभृथादुदेत्य तदन्तं कृत्वा पुनर्दीक्षेत तादृशेनैव क्रतुना।

६. तत्र तस्मिन् पुनर्यज्ञे प्रकान्तक्रतुदक्षिणां दद्यात्। पुनर्यज्ञो ह्येष तत्र क्रतुप्रायश्चित्तिरिति[1] शतपथश्रुतेः (४. ५. १०. ६)। एकस्यामपि लाङ्गतौ पूतीकादिभिः कृतायामेतत्प्रायश्चित्तम्। अनेकयागाभ्यस्ते ह्येतदेकमपूर्वं सोमेन यजेतेति चोदनैक्यात्।

७. दुष्टे ऽपि कुर्यादिति वाक्यशेषः।

८. सोमाभावे पूतीकादि यदुक्तं तत्र दाक्ष्याभावे। यच्च गां दक्षिणां दद्यादित्ययं विशेषः। शेषं पूर्ववत्।

---

७.

१. प्रातःसवनात्सोमो ऽतिरिच्येत। ततो वक्ष्यमाणं कर्म।

२. अस्ति सोमो अयं सुत इति स्तोत्रियः। आम्नायक्रमेण उत्तरो ऽनुरूपः। स्तोत्रग्रहणं पूर्वत्राधिकारविच्छेदात्।

३. वक्ष्यमाणाभिरन्याभिश्चैवंदेवताभिः[2] सह स्तोत्रियानुरूपाभ्यां सोमातिरंसनम्। ऐन्द्रावैष्णवीभिरिति सप्तार्थे तृतीया।

४. विष्णोः कर्माणि पश्यतेति नैघण्टुके [3]ऐन्द्रावैष्णवयुक्ता। अन्यत्राप्येवं स्वरूपस्य परिग्रहः। कथं नाम स्यादिति।

५. इन्द्रमिद्गाथिनो बृहत्सूक्तम्। अतो देवा अवन्तु न इति पञ्चचः एताः सूक्तासंभवात्[4]।

---

१ A om. क्रतु॰। २ C D ॰भिस्तैवंदेवताभिः। ३ A ins. ऐन्द्रे। ४ A स्वरूपसं॰।

६. अतो देवा अवन्तु न इत्येतस्य पञ्चर्चस्योत्तमया परिधाय विष्णोः कर्माणि पश्यतेत्येतया यजति।

---

८.

१. वक्ष्यमाणं कर्म। सोमाधिकारो होत्रग्रहणं चानुवर्तते।

२. अपमर्दो अभि सूर्येति स्तोत्रियः प्रगाथः। उत्तरो ऽनुरूपः।

३. त्रिष्टुबर्थं वचनम्। अस्येदु मातुः सवनेषु सद्य इत्येका। दिवो न तुभ्यमन्विन्द्र सत्रेत्येका। सं वां कर्मणा समिषा हिनोमीत्यष्टौ। उरुं यज्ञाय चक्रथुरु लोकमिति तिस्रः। सूक्तमेव गायत्र्यः। एताः छन्दसी वत्। अर्यमा वरुणश्चेति पन्थामित्येका। वर्धान्त्यं विश्वे मरुतः सजोषाः। मीतये वरुणं मित्रमिन्द्रमित्येते विकल्पिते।

४. या विश्वासां जनितारा मतीनामिति यद्वा इन्द्राविष्णू तत्पनयाय्यं वामित्येतयोरन्यतरा[1]।

---

९.

१. यथा पूर्वयोः सवनयोः भक्षं तथेहापि द्रष्टव्यम्। आश्विनादतिरिक्त इति विशेषस्मात्।

२. प्र तत्ते अद्य शिपिविष्ट नामेति स्तोत्रियः। प्र तद्विष्णुः स्तवते वीर्येणेत्यनुरूपः।

---

1 C D omit.

३. जगत्यर्थं आरम्भः । प्र वः पान्तमन्धसो धियायत इति तिस्रः सूक्तं वा । आ वो विवाय सचथाय दैव्य इत्येका । सखे विष्णो वितरं वि क्रमस्वेत्येका । समस्य विष्णुर्महिमानमोजसेत्येका सूक्तं वा । मरुल्लिङ्गान् परित्यजेदन्यास्त्र ।

४. त्रैषमित्या समरणं त्रिमीवतोरिति ।

---

१०.

१. सोम इति वर्तत एव । आश्विनं शस्त्रं समाख्यानात् । तस्मात्सोमे ऽतिरिक्ते वक्ष्यमाणं शस्त्रम् ।

२. अच स्तोत्रियानुरूपौ प्र तत्ते अद्य शिपिविष्ट प्र तद्विष्णुरिति तृतीयसवनत्वाविशेषात्[1] । स्तोमातिशंसनायाश्विन्यः[2] प्रचुरा एव ।

३. अविशेषाद्या काचित् ।

४. पर्यायैरस्तुते यथादित्य उदियात्ततः पञ्चभिः स्तोमैः पञ्चकैः स्तोमैर्वोत्तरकेभ्य इति तादर्थ्ये चतुर्थी । स्तुवते छन्दोगाः ।

५. आदितो ऽवच्छेद इति न्यायात्[3] आद्ये द्वे ऋचौ । आगतानामिति नोक्तं त्रिष्टुप्परिहारार्थम् । ततो मां धुरिन्द्र नामा देवतेत्युद्धार्या ।

६. कर्तव्या इति वाक्यशेषः । अशस्तापि चतुर्दशीं त्र्यथोद्यता परिधानं नित्या इति वचनात् ।

---

[1] C D ०नत्वाविशेषात्, A M ०नत्वादिशेषात् । [2] A स्तोमातिशंसे तु नाप्यश्वि० ।
[3] A न्यायात् ।

७. छन्दोगाः स्तुवते तथैव शस्त्रम्।

८. होत्रे वा प्रथमानां स्तोतॄणां छन्दं भवति। तथैव[1] शस्त्रम्।

९. छन्दस्तवनशंसने कर्तव्ये।

१०. छन्दस्तवनं शंसनं च।

११. आश्विनमप्येतावत्परिमाणमभिव्योषे कार्यम्।

प्रतानि चौणि यथा च[2] व्युष्टायामाश्विनं भवेत्।
प्रत्यचाणामृचां भाष्य छन्दीनां च संपदा ॥१॥
प्रतिपञ्चिर्नवोपेत्यग्निमीळे पुरो भव।
ता राजाना चतस्रस्तु ज्ञेया अग्ने कदाचन ॥२॥
यो मर्त्येष्विति चैका स्यादगन्मेति तृचः स्मृतः।
प्रगाथो उभे विवस्वत्स्यादेष एव कतुप्रजनः ॥३॥
एते द्वे प्रथमग्निः षट् त्वामग्ने द्वे तृचं पुरः।
सप्त वेदिषदे ज्ञेयास्तृचे मेति[3] अनस्य च[4] ॥४॥
अग्निं तं द्रप्स तिस्रः कः पञ्च चोत सखायोति।
उषो भद्रेभिरा सूक्तमेकोपो रुरुचे तथा ॥५॥
प्रति स्तोमेभिरुषसं सूक्तमुपो यदद्य दे।
उपस्तिष्ठ एता उ चतस्रः शुमेदे द्रप्स ॥६॥
अश्विना यज्वरीरिषस्तिस्र एका न यत्परः।
दूरादिहेव षट्त्रिंशदुदीराथां दृषाष्टौ च ॥७॥
आ मे हवं नवैका नः को वामद्य चतस्रस्तु।

---

१ A नवैव। २ A यथा, C यथा, M यथानि। ३ C °तृचे मेति, A तृचमेति।
४ A चानस्य च।

एका भात्यग्निरुषसां नासत्याभ्यां सूक्तं तथा ॥८॥
का राधद्व मध्वस्तु सूक्ते सूक्ते युवोस्तथा।
तं युञ्जाथां नवा मे हवं नासत्या पञ्चपञ्च[1] ॥९॥
युवोरु षू रथं त्रिश्चिदेका तिस्रः समानसु।
नव प्रति,प्रियतमं तुभ्यं सूर्यादि यत्परम् ॥१०॥
मक्तुभियेत (?)[2] ता ज्ञेया गायत्र्येकोष्णिहा परे[3]।
अनुष्टुबुष्णिहौ च द्वे बृहत्युष्णिगनुष्टुभः[4] ॥११॥

---

## ११.

१. सत्त्रे गणयज्ञे वा। यदि दीक्षितो म्रियेत कथं स्यादित्यत आह।

२. दग्ध्वा निर्मथ्येन ग्रामिणाग्ना आवृतेन लौकिकेन वा ग्रामान्तरात्। अस्थीन्युपनह्य ततः पुत्रं[5] भ्रातरं वा दीक्षयित्वा सांनिपातिकैः संज्ञप्तं तेन सह यजेरन्।

३. पुत्रं भ्रातरं वा दीक्षयित्वा सह यजेरन्नित्येतन्निरसेत्[6] कल्पान्तरमेतदारभ्भदात्[7]। दग्ध्वास्थीन्युपनह्येत्येतदस्मिन्नपि पक्षे भवत्येव। अभिषुत्य सोमं राजानमगृहीत्वा पश्चाद्दक्षिणापरस्यां वेदिश्रोण्यां यजमानास्थिकुम्भं निधाय तस्मिन्देशे दक्षिणापरे वेदिश्रोण्या देशे छन्दोगाः सार्पराज्ञीभिरायं गौरित्येताभिः परा-

---

1 C in marg. मे सोमतादृशाष्टौ चान्वयं सूक्तः। 2 C D चकुभीयेत। 3 A परो।
4 C D उष्णिग्विष्टुभः। C in marg. त्रिचं देवानामित्यादि चान्यांत प्रक्तिव दित्यर्थः।
5 C तत्। 6 C D M निरासेन। 7 C D M °द्वादशमन्दात्।

चीभिरनावृत्ताभिः स्तुवते। तत्र दक्षिणतो ब्रह्मा मैत्रावरुणश्चोपविश्य स्तोत्रप्रसवं कुर्याताम्।

४. मार्जालीयसंनिधौ वा अस्थिकुम्भं निधाय सार्पराज्ञीभिः पराचीभिः स्तुवते।

५. यजमानास्त्रिः प्रसव्यं प्रदक्षिणं मार्जालीयं परियन्ति भ्रमन्ति सव्यानूरूनपाघ्नानास्ताडयन्ति[1]। सव्यैरेव पाणिभिः।

६. आयं गौरिति स्तोत्रदेश[2] एव प्राचीनावीती दक्षिणामुख इति शाखान्तरात्। निगदेदिति नैकस्वर्यं न गणधर्मः।

७. असंमितमपरिमितं न्यूनमतिरिक्तं वा। न प्रमाणाद्भूयः। अपरिमितेष्टके[3] ऽग्नौ श्रुतिदर्शनाद्वैपरे[4] च यथा नवम्यां यथेति(?)।

८. नियमतो ऽस्थिवहनि भवन्ति।

९. मरणात्संवत्सरे ऽस्थीनि याजयेयुरितरे यजमानाः। अस्थिमतो याजयेयुरिति केचिदाहुः।

१०. स्तोत्रेस्तोत्रे स्तूयमाने स्तोत्रसंनिधाने ऽस्थिकुम्भं निदध्युः।

११. तदीयाम्।

---

१२.

१. कलशो द्रोणकलशः। पूर्वपदलोपेन। तस्मिन् दीर्घे सोमनाम्नि सतीति[5] शाखान्तरात्। नैमित्तिकमुच्यते।

---

१ C D om. ताडयन्ति। २ A स्तोत्रमेव। ३ A अपरिमिते इष्टके। ४ D अग्निदर्शनादिति वैपरेव। यथा नवाम्यां यथेति। C like D, M •दर्शनादिवैपरेव। यथा नवाम्याचयेति; in marg. वे। ५ A om. इति।

२. विधुं दद्राणं समने बहूनामित्यस्यां वषट्कारनिधनेन साम्ना¹ पृष्ठं ब्राह्मणाच्छंसिने स्तुवते छन्दोगाः। स एव स्तोत्रियः कार्यः।

३. महत्तन्नाम गुह्यं पुरुस्पृगिति। पूर्वो ऽनुरूपः शंसितव्य-स्ततः स्तोत्रिय इति। संदेहो मा भूदिति वचनग्रहणम्।

४. यावद्गौरथैकवचनमविवक्षितं। किं तत्र भवतीत्यत आह।

५. सवनाधीनत्वाच्छंसनस्येति सूत्रारम्भः।

६. अथैवोत्तरो ऽनुरूपो मह उग्राय तवसे सुवृक्तिमिति। यदि पुनः कलशदरणं यावद्दरणं चोभे भवेतां ततः पूर्वदौर्बल्यं न्याय्यम्।

७. उभयोरपि यावद्दरणकलशदरणयोः।

८. त्रिष्टुप् माध्यन्दिनत्वात्।

९. अभ्युन्नीतं नाराशंसमन्तःपरिधि भक्षमिति जुहुयात् हुता-हुतस्येत्येवमादिना मन्त्रेण।

१०. शुक्के² नाराशंसे वक्ष्यमाणकं विधापराधे नैमित्तिकम्।

११. यं यत्रं जघन्यं ग्रहीयान्तस्मात्स्वमर्धादूनमुपवाते नाराशंसे सोमचमसे ऽवनयेत्प्रजापतये स्वाहेत्यनेन मन्त्रेण।

१२. दुष्टं सोममविशेषात् नाराशंसमन्यं वा प्राजापत्याभि-र्हिरण्यगर्भ इत्याद्याभिस्तस्रभिरध्वर्युर्मन्त्रान्तेन ³प्रतिमन्त्रमुत्तरार्ध-पूर्वार्धे उपरवाख्ये अवटे ऽवनयेत्।

१३. यस्याभिषुतस्य सोमस्योपरिष्टादववर्षणं भवति तस्य भक्षणकाले यथाप्राप्तं मन्त्रमपनीय मन्त्रान्तरेणेन्दुरिन्द्रमित्यादिना

---

१ A साम्नो। २ A शुक्के। ३ A inserts प्रतिमन्त्रान्तेन।

धीभिरनावृत्ताभिः स्तुवते। तत्र दक्षिणतो ब्रह्मा मैत्रावरुणश्चोपविश्य स्तोत्रप्रसवं कुर्याताम्।

४. मार्जालीयसंनिधौ वा अस्थिकुम्भं निधाय सर्पराज्ञीभिः पराचीभिः स्तुवते।

५. यजमानास्त्रिः प्रसव्यं प्रदक्षिणं मार्जालीयं परियन्ति भ्रमन्ति सव्यानूरूनपाघ्नानास्ताडयन्ति[1]। सव्यैरेव पाणिभिः।

६. आयं गौरिति स्तोत्रदेश[2] एव प्राचीनावीती दक्षिणामुख इति शाखान्तरात्। निगदेदिति नैकस्वर्यं न गणधर्मः।

७. असंमितमपरिमितं न्यूनमतिरिक्तं वा। न प्रमाणाद्भूयः। अपरिमितेष्टके[3] ऽग्नौ श्रुतिदर्शनादेवरे[4] च यथा नवम्यां यथेति(?)।

८. नियमतो ऽग्निचयनानि भवन्ति।

९. मरणात्संवत्सरे ऽस्थीनि याजयेयुरितरे यजमानाः। अग्निमतो याजयेयुरिति केचिदाहुः।

१०. स्तोत्रेस्तोत्रे स्तूयमाने स्तोत्रसंनिधाने ऽस्थिकुम्भं निदध्युः।

११. तदीयान्।

---

## १२.

१. कलशो द्रोणकलशः। पूर्वपदलोपेन। तस्मिन् दीर्णे सोमनाशे सतीति[5] शाखान्तरात्। नैमित्तिकमुच्यते।

---

१ C D om. ताडयन्ति। २ A स्तोत्रयेष। ३ A अपरिमिते इष्टके। ४ D श्रुतिदर्शनादिति वैपरेव। यथा नवाभ्या यथेति। C like D, M ॰दर्शनाद्विवैपरेव। यथा नवाभ्यायथेति; in marg. वे। ५ A om. इति।

२. विधुं दद्राणं समने बहूनामित्यस्यां वषट्कारनिधनेन साम्ना[1] पृष्ठं ब्राह्मणाच्छंसिने भुवते छन्दोगाः। स एव स्तोत्रियः कार्यः।

३. महत्साम गृह्णं गृहस्णुगिति। पूर्वो ऽनुरूपः शंसितव्य-स्ततः स्तोत्रिय इति। संदेहो मा भूदिति ह्यचग्रहणम्।

४. याज्यैत्येकवचनमविवक्षितं। किं तत्र भवतीत्यत आह।

५. स्वयनाधीनत्वाच्छंसनस्येति सूत्रारम्भः।

६. असैवोत्तरो ऽनुरूपो मह उग्राय तवसे सुवृक्तिमिति। यदि पुनः कलशदरणं ग्रावदरणं चोभे भवेतां ततः पूर्वदौर्बल्यं न्याय्यम्।

७. उभयोरपि ग्रावदरणकलशदरणयोः।

८. त्रिष्टुप् माध्यन्दिनत्वात्।

९. अभ्युन्नीतं नाराशंसमन्तःपरिधि भस्मनि जुहुयात् द्रप्स-स्कन्नेत्येवमादिना मन्त्रेण।

१०. शुष्के[2] नाराशंसे वक्ष्यमाणकं विधपराधे नैमित्तिकम्।

११. यं यर्त्र जघन्यं प्रदीयाचत्तान्यमर्धादूनमुपवाते नाराशंसे सोमचमसे ऽवनयेत्प्रजापतये स्वाहेत्यनेन मन्त्रेण।

१२. दुष्टं सोमभविशेषात् नाराशंसमन्यं वा प्राजापत्याभि-र्हिरण्यगर्भ इत्याद्याभिस्तदृग्भिरध्वर्युर्मन्त्रान्तेन [3]प्रतिमन्त्रमुत्तरार्ध-पूर्वार्ध उपरवास्ये प्रवटे ऽवनयेत्।

१३. यस्याभिषुतस्य सोमस्योपरिष्टाद्दवर्षणं भवति तस्य भक्षणकाले यथाप्राप्तं मन्त्रमपनीय मन्त्रान्तरेणेन्दुरिन्द्रमित्यादिना

१ A साम्नो। २ A शुष्के। ३ A inserts प्रतिमन्त्रान्तेन।

भक्षणं कुर्यात् । कृत्स्नं वेदमस्तमसाद्यमित्यादेश्च ध्यानं युगपत् कार्यम् ।

१४. हिरण्यगर्भः समवर्तताग्र इत्यनेन मन्त्रेणाज्याहुतिं जुहुयाद्यस्य चमसो ऽभ्युपाहृतः ।

१५. उत्तरमिवावछायेति[1] (?) छन्दोगानां । तेन वाक्येन वावछाय सदसो निर्हरेदभ्युपाहृतं चमसम्[2] ।

१६. य एते चिद्भिश्रिष इत्यनेन तृचेन महावीराख्यं[3] भिन्नपात्रमनुमन्त्र्य तत आहुतीर्जुहुयात् । निर्हरेत्कर्मानादिष्टत्वात्[4] ।

१७. त्रयस्त्रिंशत्तन्तव इत्येवमादिना देवानित्येवमन्तेन मन्त्रेणैकाम् । द्वितीयां यस्य द्रोहो वितत इत्यादिना स्वाहाकारान्तेन मन्त्रेणैते आज्याहुती होता जुहोति । चशब्दादध्वर्युश्च । समाप्तोक्ता ।

---

## १३.

१. यदीति वचनाविशिष्टं न स्वयमुत्पाद्यम् । सत्राय दीक्षितः सत्रार्थं दीक्षादिषु प्रवृत्तक्रियः । अयमब्दाहृदबुद्धिरपि कथंचित्साम्युत्तिष्ठेदपरिसमाप्तसत्रस्य तदनुष्ठानभङ्गो भवेत् । ततः सोममपभज्य सोमं विभज्य राजानं प्रधानद्रव्यत्वेन ऋत्विभिरङ्गीकृतं क्रीतमक्रीतं वा विश्वजितातिरात्रेण यजेत सर्वस्तोमेन सर्वपृष्ठेन सर्ववेदसदक्षिणेनेति विशिष्टो विश्वजिद्यागो नैमित्तिकः । सत्राङ्गं

---

१ A चि था॰ । २ C निर्हरेच्चसा अभ्युपाहृतं । D निर्हरेच्चमसा अभ्युपा॰ ।
३ C D महावीरपात्र भिन्नम् । ४ A नष्टत्वात्, M ॰त्वर्थं नोपदि॰ ।

चोच्यते। अनिष्टप्रथमयज्ञस्याहिताग्नेः सत्त्रिणः सामुत्थाने आग्नेयीष्टिः सर्ववेदसदक्षिणा भवति। अनाहिताग्नेराग्नेयश्चरुरित्येवं[1] केचिदाहुः।

२. संकल्प्यापि सत्त्रमकुर्वन् विश्वजितातिरात्रेण यजेत। वाशब्दो विकल्पार्थः॥

[2]उक्तो द्वादशाहः सत्रौत्तसद्धर्मातिदेशश्च केषांचिदङ्गाम्। तदनन्तरं ते चेदनुपदिष्टं कुर्युरित्यनेनोपदिष्टानुपदिष्टप्रयोगेन नैमित्तिकान्युपदिष्टानि। तत्र द्वादशाहो ऽहर्गणः। अहर्गणानां च कानिचित्सत्त्राणि केचिदहीनाः। अस्ति तेषु धर्मभेदः। तत्र द्वादशाह उभयात्मा समाने ऽप्यहर्गणत्वे। तस्याप्यनेन विशेषेण सत्त्रत्वं। सत्त्रसंज्ञस्तु यो ऽहर्गणस्तस्य धर्मविशेषा वक्तव्यास्तानाह।

---

१४.

१. गृहपतिसप्तदशा होत्रादयो यथोपदिष्टाः[3] सत्त्रार्थमासीरन्। य ऋत्विजस्ते यजमाना गृहपतिसप्तदशाः[4] सत्त्रमासीरन्निति शाखान्तरश्रुतेः। आहिताग्नय इष्टप्रथमयज्ञा[5] दीक्षिता इत्येतदेषामेव विशेषणत्रयम्।

२. सत्त्रे गृहपतिरोधो[6] नास्ति। यथा साध्यं याजमानं च मयोदमिति ब्राह्मणः। अशक्ते तु यौगपद्ये सति आर्त्विज्यस्यानु-

---

१ C D अनाहिताग्नेराहिताग्नेश्चरुरि (चरुरि॰ ?.)　२ C D om. the passage beg. with उक्तो and ending with तानाह। ३ C D यथोदिष्टा। ४ A यजमान। ५ A ins. एवत्रेणनता। ६ A गृहपदीनिरो॰, M गृहपतिः रा॰।

रोधेन क्रिया। यथा होतुरिलोपह्वानं मयीदमिति जपश्च। तथार्त्विज्यमिलोपह्वानं कृत्वा तस्यानुरोधेन[1] पश्चान्मयीदमिति जपः।

३. दीक्षणानुपूर्व्यं दीक्षणाक्रमः। तेषां गृहपतिः प्रथमो दीक्षेत[2] इत्येवमादिकः। तेनानुपूर्व्येण सर्वेषां यजमानानामिदमिति याजमानमार्षेयाभिव्याहरणादि।

४. परार्थानि कल्पर्थान्यौदुम्बरीसंमानादीनि[3] तानि मुख्यः प्रधानः कुर्यात्। स च एकः कुर्यात्। तथा च कात्यायनः[4] परार्थमेकः[5] कृतत्वादिति (१२. १. १४)।

५. केचिद्वाराग्रंथकल्पाः केचित्तनूनपात्कल्पाः केचित्तूभयकल्पाः[6] मन्त्रकल्पे द्वैधे[7] भूयसां यः कल्पस्तत्साधर्म्यमितरेषाम्।

६. ऊनेषु दाक्षिणेष्विति सत्यसति वा[8] दक्षिणाहोमे कालावधिरयं[9]। दक्षिणापथेन दक्षिणामार्गेण। ते प्राश्नासदर्शी दक्षिणेमान्नीभतीर्थेन कृष्णाजिनानि धून्वन्तयाजयन्तो दीक्षिताः प्रतिदिनमेवं [10]जपेयुरिदमहमित्यादिकं मन्त्रम्।

७. उत्थाय परिसमाप्य सत्त्रमग्निष्टोमसंस्थः सहस्रदक्षिणः पृष्ठशमनीयाख्यः कार्यः। सत्त्रिणः सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्निति शाखान्तरश्रुतेः। स काममेव पृष्ठशमनीयेन यजेत कामं न यजेत (१८. २४. २०) यदि तु यजेरन्नेत एवास्य सत्त्रिण ऋत्विजः स्युरित्यारण्यके वचनात् पृथक्पृथक् पृष्ठशमनीय इत्येवावसीयते।

---

१ C D तस्यानुपरोधेन। २ A प्रथमं दीक्षित। ३ C D M समादीनि।
४ C D M कात्यायना। A कण्वायनः। ५ M एव instead of एक।
६ C D M om. उभयकल्पा, B (in marg) ॰भयाख्यन्। ७ A मन्त्रकल्पद्वैध॰।
८ A om सत्यसति। ९ C D M ॰विधिरयं। १० A एव नमन्तो गच्छेयुरिद॰

५. अनुयाजेष्विष्टेष्वित्यनेनोभयं प्रतिपाद्यते। सत्यनुयाजयागे व्यूहनमिष्टेषु चानुयाजेष्विति व्यूहति प्रेरयतीत्यर्थः। स्रुचौ वक्ष्यमाणे। ननु तस्मादेव सिद्धम्। सत्यम्। अधिकारनिषेधार्थमेतत्। कथं व्यूहति। अग्नेरग्नीषोमयोरित्यादिना मन्त्रेण जुहूं प्राचीं गमयति दक्षिणेन हस्तेनोत्तानेन। अग्निरग्नीषोमावित्यादिना मन्त्रेणोपभृतं प्रतीचीं गमयति न्युब्जेन सव्येन हस्तेन। आत्मार्थमाशीर्योगात्। ततोऽनेकयजमानत्वे सर्वे यद कुर्युः। अशक्ये चान्वारभेयुर्मन्त्रं ब्रुवाणाः।

६. यायाप्रधानदेवता[1] तांतामुपलक्ष्य व्यूहनं कार्यम्। मान्त्रमेवैतद्दीक्षितायमार्थमनावाप्यार्थं बोध्यते।

७. पूर्वं गृहपतेरिति यः पत्नीसंयाजेषूक्तः सोऽस्यावधित्वेन गृह्यते। तस्मिन्निष्टे गार्हपत्ये स्रुवेण जुहुयादेवमेव शाखान्तरे श्रुतत्वात्। प्राग्गृहपतेरिति नोक्तम्। यत्रैव गृहपतियागस्तत्रैवैता आहुतयो यथा स्युरिति। आहुतिधर्मा होमद्रव्यं च परिभाषासिद्धम्। मन्त्रानिदानीमाह।

---

१०.

१. प्रथमा द्वितीयेषु पराक्रमध्वं[2] द्वितीयास्तृतीयेषु पराक्रमध्वं तृतीयाश्चतुर्थेषु पराक्रमध्वं चतुर्थाः पञ्चमेषु पराक्रमध्वं पञ्चमाः

---

१ A C (sec. b) यथाप्रधान। २ H adds यम धर्माणामधिपते इन्द्र ज्येष्ठाना-मधिपते प्रजापते प्रजानामधिपते देवा देवेषु पराक्रमध्वम्।

५. अनुयाजेष्विष्टेष्वित्यनेनोभयं प्रतिपाद्यते। सत्यनुयाजयागे व्यूहनमिष्टेषु चानुयाजेष्विति व्यूहति प्रेरयतीत्यर्थः। स्रुचौ वक्ष्यमाणे। ननु तस्मादेव सिद्धम्। सत्यम्। अधिकानां प्रतिषेधार्थमेतत्। कथं व्यूहति। अग्नेरग्नीषोमयोरित्यादिना मन्त्रेण जुहूं प्राचीं गमयति दक्षिणेन हस्तेनोत्तानेन। अग्निरग्नीषोमावित्यादिना मन्त्रेणोपभृतं प्रतीचीं गमयति न्युब्जेन सव्येन हस्तेन। आत्मार्थं आशीर्योगात्। ततोऽनेकयजमानके सर्वे सह कुर्युः। अध्वर्यं चान्वारभेयुर्मन्त्रं ब्रुवाणाः।

६. याया प्रधानदेवता तांतामुपलक्ष्य व्यूहनं कार्यमित्येवमेवैतदद्दीक्षितायनार्थममावास्यार्थं चोच्यते।

७. प्रतीत्यप्रतेरिति यः प्रतीचीं दिशं युदुहति। यज्ञोपवीती पूर्ववत्।

७. उदीच्येत्येवमादिना मन्त्रेणोदीचीं दिशं युदुहति पूर्ववत्।

८. ऊर्ध्वयेत्येवमादिना मन्त्रेणोर्ध्वां दिशं युदुहति। मन्त्रलिङ्गात्। इतिकरणो मन्त्रान्तप्रदर्शनार्थः। अर्थभेदात्तु प्रतिदिशं पयोक्तो मन्त्रभेदः।

९. उक्तार्थमेतत्। पूर्णपात्राभिमर्शनमाशीर्योगादात्मार्थम्। दिशां युदुहणमपि तत्संयोगात्।

१०. विष्णुक्रमान् क्रमत इत्येवमन्तं सूत्रम्। अबन्तानि खण्डशो व्याख्यायन्ते। क्रमार्थश्चायं प्रत्ययः। आपो हि ष्ठा मयोभुव इत्येवमाद्याभिस्तिसृभिर्युदुहणमेषा अपो ऽभिमृश्य।

११. अच्छायं वो मरुतः श्लोक एतु। यथोरोजसा स्कभिता

रजांसीत्याभ्यां मन्त्राभ्यां ता अपः प्राचीर्निनीयोदीचीर्वेति द्विविकल्पः ।

१२. समुद्रं व इत्येवमादिना मन्त्रेण प्रहुता अपो ऽभिमन्त्रयेतानुपस्पृशन्[१] । अभिमन्त्रणं तदभिमुखेन भूत्वा मन्त्रोच्चारणम् ।

१३. शं नो देवीरभिष्टय इत्येवमाद्याभिस्तस्भिरपो ऽभिमन्त्रयेत् ।

१४. समिन्द्र णो मनसा नेषि गोभिः संवर्चसेत्याभ्यां मन्त्राभ्यां प्राणानुपस्पृशेत् । प्रत्यृचमेतेन मन्त्रेण ।

१५. अनु म इत्येवमादिना मन्त्रेण मुखमण्डलं पाणिना विशोधयति ततः ।

१२.

१६. विष्णुक्रमाख्यं क्रमणं करोतीत्यर्थः । क पुनस्तत्करोतीत्यत आह ।

१. वेदेर्यो दक्षिणश्रोणिदेशो दक्षिणापरः कोणः । तस्मादारभ्य क्रमते तावद्यावदाहवनीयः ।

२. स्थानाद्दक्षिणं पादं गमनाभिमुखमुद्यम्य वेदेस्त्रिभागमात्रे स्थापयेत् । दिवि विष्णुरित्येवमादिना मन्त्रेण । तस्माद्भ्यो हीनतरं सव्यं स्थापयेत् ।

३. अन्तरिक्षे विष्णुरित्येवमादिना मन्त्रेण द्वितीयं क्रमणं कुर्यात् ।

---

१ B अप उपस्पृशन् ख० ।

४. पृथिव्यामित्येवमादिना मन्त्रेण तृतीयं क्रमणं कुर्यात्।

५. दिक्षु विष्णुरित्येवमादिना मन्त्रेण तिर्यक्पादं निदधाति। न तु क्रामति परस्मैपदोपदेशात्।

६. तमहमित्येवमादिक[1] उदर्को वाक्यशेषः। समानस्तुल्यः। सर्वेषु मन्त्रेषु प्रयोक्तव्य इत्यर्थः।

७. अगन्म स्वरित्येवमादिना मन्त्रेण प्राचीं दिशमीचते।

८. ईक्षत इत्यनुवर्तते। सं ज्योतिषाभूमेत्यनेन मन्त्रेणाहवनीयमीचते। वरुणप्रघासेष्वाहवनीयौ द्वौ। तयोर्द्वयोरपीक्षणमविशेषात्। ऊहश्च न भवति। ज्योतिःशब्दस्य दीप्तिवाचकत्वात्।

९. ईक्षत इति वर्तते। समहमित्येवमादिना मन्त्रेण प्राचीमेव दिशमीक्षते। एवकाराच्च पूर्वेण सह विकल्पः।

१०. अपतीति सूत्रच्छेदः। व्यवस्थानि तु खण्डशो व्याख्यास्यन्ते। एवं च निर्देशः क्रमार्थः। स्वयंभूरित्येवमादिना मन्त्रेणादित्यमुपतिष्ठते। दर्शनगोचरं गत्वा। कुत एतत्। अथात्रैवेत्येवमादिना ग्रन्थेन महाव्रते विशेषात्।

११. ऐन्द्रीमावृतमित्येवमादिना मन्त्रेण दक्षिणं बाहुमावर्तमानमन्वावृत्य। होत्रवदिति नोक्तम्। तत्रावर्तनमात्रमत्र न भ्रमणमिति विशेषात्[2]।

१२. सव्याङ्गुला एत्य गार्हपत्यमुपतिष्ठत इति शेषः। कथमुपतिष्ठते तूष्णीं मन्त्रेण वेत्यत आह।

१३. अग्ने गृहपत इत्येवमादिको मन्त्रो गार्हपत्योपस्थाने।

---

१ C °त्येवमादिना। २ C °मविशेषात्।

४. संस्कार्यं वापयित्वेत्यर्थः। रोमनखानीति रोमशब्दः केशश्मश्रोरप्युपलक्षणार्थः। प्रेतग्रहणं पत्न्या अपि पूर्वमारिण्याः क्रियार्थम्।

५. आप्लुत्य[1] प्रेतमनुलेपनपुष्पादिभिरलंकृत्य। एतद्गृहे कृत्वा अन्यदवक्ष्यमाणदेशे कर्तव्यम्। कः पुनः स देश इत्यत आह।

६. किं कुर्यादित्यत आह।

७. इत उत्तरं प्राचीनावीतिना कर्तव्यम्। कुत एतत्। आचारार्थवादमन्त्रलिङ्गेभ्यः। अपेत वीत वि च सर्पतात इत्यादिना पूर्वोक्तं देशं पलाशशाखया विमृज्य।

८. स्फ्येन करणभूतेन उन्मृज्य उद्धृत्येत्यर्थः। अभ्युक्ष्य। अद्भिरुपसिच्येत्यर्थः। कृत्वैवं देशसंस्कारं ततः।

९. प्राग्दक्षिणाभिमुखीं प्राग्दक्षिणाग्रैः काष्ठैश्चितिं[2] कृत्वा।

१०. तस्या एव काष्ठचितेः पुरस्तादाहवनीयं निदध्यात्। पश्चाद् गार्हपत्यं दक्षिणतो दक्षिणाग्निम्। अत्र एवोद्धरणं कृत्वा शकटेन नीयन्ते। अग्नयो यजमानस्य शाखान्तरात्[3]।

११. काष्ठचितिमारोपयितुं गार्हपत्यं दक्षिणाग्निं चान्तरेण यजमानशरीरं नयेत्। ननु प्राप्त एव न्यायतो यजमानस्य संचरः। उच्यते। प्रवासे मृतस्याहृतस्य व्यवेतो ऽग्नीन् प्रवसति तेन चैवोत्सृज्यत इत्याहवनीयं दक्षिणाग्निं चान्तरेणाहरणाशङ्का स्यात् तन्निवृत्त्यर्थे वचनम्।

---

१ A C आङ्गाव। २ Com. काष्ठैः। ३ A om. the words from यत्र to शाखान्तरात्।

१२. काष्ठचितौ उत्तानं शवं निपात्य ततः।

१३. दक्षिणतश्चितेः पश्चाद्वा गां चानुस्तरणीमजां वा। अनुस्तरणीति तस्याः संज्ञा। वक्ष्यति। अनुस्तरण्या गोश्चर्माधिपवणमिति। अजां छागीं रोहिणीमेव। अनयोरन्यतरां दक्षिणमुखीं प्रोक्ष्य प्रकर्षेण गले गाढं बद्धेत्यर्थः। ननु उभः कुम्भपूरणे स्मर्यते। सत्यम्। अनेकार्था हि धातव इत्यदोषः। प्रयोगश्च संदृश्यते। दाषा यदीं सुमनुभ्यमवाधुरिति। ननु छान्दसप्रयोगदर्शनात्तत्रैवायं साधुः कथं सूत्रकारेण प्रयुक्तः। उच्यते। वेदार्थव्याख्योन्मुखानां नायं दोषः।

१४. तस्या अनुस्तरण्या जीवन्त्याः संज्ञप्ताया वा वृक्कावुद्धृत्य पाण्योरादध्याद्दक्षिणे दक्षिणं सव्ये सव्यमिति संलग्नावुद्धृत्यासुद्धरेत्। पृष्ठतः पृष्ठेनेत्यर्थः।

१५. तौ वृक्कौ दक्षिणप्राचीपदुष्णौ कृत्वा तत आति द्रव सारमेयौ श्वानाविति द्वाभ्यामृग्भ्यां हस्तयोः प्रेतस्य निदध्यात्। अनाहिताग्नेरौपासने ऽप्याधार्यविकारत्वात्[१]। पिण्डपितृयज्ञवदिति सर्वमेतद्भवतीति वृद्धसंप्रदायः।

१६. प्राणायतनानि[२] मुखं नासिके चक्षुषी कर्णौ तेष्वेकैकं हिरण्यशकलं निदध्यात्।

१७. अग्नेर्वर्म परि गोभिर्व्ययस्वेत्यनया ऋचा अनुस्तरणीवपया शवस्य मुखमण्डलं प्रच्छाद्य ततः।

१८. दक्षिणे हस्ते ऽयाष्याग्नेय्यभिमुखानि कार्याणि प्रेतपादौ चेति देवयुवं जुहूमाग्नेय्यां सादयतीति शेषः[३]। जुह्वादीनामनेकत्व-

---

१ B C (in marg.) पूर्वाधिकारत्वात्। २ B om. प्राणायतनानि। ३ C has only दक्षिण हस्ते जुहूं सादयतीति; in marg. चाग्नेय्यां। देवयुवं corrected A देवय।

संभवे सर्वेषां यथास्थानं प्रतिपत्तिरविशेषात्। सत्त्रेषु सत्त्रिणां साधारणान्यन्यानि पात्राणि भवन्ति। तेषां सत्रान्त उत्सर्गः। तादर्थ्यात्[1]। मृतस्य सत्त्रिणो मृतस्य स्वैरेव पात्रैर्दाहः। अपि वान्यानि पात्राणि साधारणानि कुर्वीरन्निति मीमांसकाः। संस्थितदर्शपूर्णमासस्य कृतप्रयोजनान्यपि धारयेद्दाहाय। अनाहिताग्न्यग्निहोत्रायणिनोः स्थालीपाकपूर्णाहुतिस्रुचौ जुह्वविकारत्वात्। एतेन पृषदाज्येन च पूरयित्वा सादयेच्छ्रुत्यन्तरात्। आनुलोम्येन च न्यायात्।

१९. सव्ये पाणौ प्रवस्योपभृतं कुर्यात् पूर्ववत्।

२०. ध्रुवां एतेन पृषदाज्येन च पूरयित्वा प्राग्दक्षिणाग्रौमेवोरसि[2] सादयेत्।

२१. तथैव पूर्णामनुलोमां च कण्ठे स्थापयेत्।

२२. अग्निहोत्रहवणीमैडिकं च वपाया उपरि नासिकयोः प्रदेशे स्थापयेत्। ननु नासिकयोरित्युक्ते वपाया उपरीति कथं गम्यते। वपया मुखं प्रच्छाद्येति पूर्वविधानात्। एवं च सत्यन्येष्वपि प्रदेशेषु वस्त्रान्तर्हितेषु सादनं युज्यत[3] एव।

२३. प्राशित्रहरणपात्रं दक्षिणे कर्णे निदध्यात्।

२४. प्रणीताप्रणयनं सव्ये कर्णे निदध्यात्।

२५. पुरोडाशकपालानि शिरसि स्थापयेत्।

२६. स्तस्तु[4] ग्रावाण इति केचित्पठन्ति। स च पाठः सम्यगसम्यगिति श्रुतितो निर्णयः।

---

१ B om. तेषां to तादर्थ्यात्। २ C (in marg.) चाद्देयप्राग्। ३ C (sec. h.) प्रयुज्यत। ४ C दृषद in marg. स।

२७. समवत्तधानीमित्तापाचीमुदरे कुर्यात्।

२८. निदध्यात्। पात्र्यावित्यविवक्षितं वचनम्।

२९. पूर्ववत्।

३०. कल्पर्थस्य कृष्णाजिनस्य प्रतिपत्तिर्न पुरुषार्थस्य।

३१. उपस्थ उपस्थः। तस्मिन्नरणी निदध्यात्। अत्रापि द्विवचनमविवक्षितम्।

३२. ऊर्वादयोरप्युलूखलं निदध्यात्। अष्ठीवतोर्मुसलम्। अष्ठीवच्छब्देन[1] गुल्फसन्धी उच्येते।

३३. शूर्पं च शकटं च शूर्पशकटे। ते पादयोर्निदध्यात्।

३४. पादतोऽग्निहोत्रपात्राणि उपवेषस्थालीकूर्चादीनि। अनाहिताग्नेः[2] पार्वणपितृयज्ञपात्राणि। विकारैकत्वात्।

३५. जुह्वादीनि सर्वाण्युरीतत्योर्भ[3] तानीति। एतेन पृषदा- ज्येन चासंस्कृतेनाप्रदेयमात्। सर्वाणि पूरयित्वा पात्राणीतराणि च। तानीति वचनात्।

३६. अयं वै त्वमित्येवमादिकया षट्पद्या उपोहन्ति। प्रापयन्त्यग्निभिराहवनीयगार्हपत्यदक्षिणाग्न्याख्यैर्यजमानशरीरम्। पुत्रादयो यथाधिकारम्[4]। असौ स्वाहेत्यसावित्यस्य स्थाने प्रेतनामग्रहणं प्रथमान्तं सामर्थ्यात्।

---

१ A inserts here अष्ठीवन्तौ जानुनी इति पञ्चमाद्ये यद्विजानमिति मन्त्रभाष्ये। अष्ठीवद्भ्यां जानुभ्यामित्यष्टमे कश्यामिति मन्त्रभाष्ये च। २ B ॰ग्नेः सर्वेण पितृ पितृ॰। ३ C सर्वाणि पुरीतत्य The reading of B I have not noted. ४ B यथाविकारम्।

१५.

१. मैनमग्ने वि दहो माभि शोच इत्येवमाद्या दश जपित्वा सव्यावृतः सव्यं बाहुमन्वावृत्यानवेक्षमाणाः[1] पृष्ठतो ऽनिमीलयन्तः शीघ्रं प्रक्रामन्ति। प्रागुदङ्मुखाः।

२. मृत्योः पदं योपयन्तो यदैतेति द्वाभ्यामृग्भ्यामनुमन्त्रयते प्रक्रामतः पुरोहितो ऽन्यो वा।

३. आपो हि ष्ठा मयोभुव इत्येतत्सूक्तम्। यमा च सोम जेषि चेति सूक्तम्। आभ्यां सूक्ताभ्यामुदकं संपृणन्ति। स्नान्तीत्यर्थः। कथं स्नान्ति। शिरांस्युदके नमनेनाप्रवेशयन्तः असंधावमानाः परस्परमङ्गान्यननुघर्षयन्त इत्यर्थः।

४. प्रत्यायन्तीति सूत्रच्छेदः। अवान्तानि तु खण्डश उच्यन्ते। असाविति नामधार्ं सपिण्डा उदकाञ्जलिमेकं दद्युः।

५. उदकादुत्क्रामन्ति। आपो अस्मान्मातरः शुन्धयन्त्वित्येवमादिना मन्त्रेण।

६. अहतमधौतं नवं वासः परिधायानन्तरम्।

७. तच्चक्षुर्देवहितं शुक्रमुच्चरदित्येवमादिना मन्त्रेणादित्यमुपस्थाय ततः।

८. कनिष्ठो ऽग्र इतरे तमनु। एवं प्रत्यागच्छन्ति गृहान्। सपिण्डा बहुवचननिर्देशात्।

९. एकस्मिन्नुदपात्रे दूर्वाकाण्डानि यवा धान्यत्वेन प्रसिद्धाः। सर्षपा ओषधिविशेषाः। एतत्त्रयं निक्षिप्यार्द्रे अशुष्के गोमये

---

[1] C orig. ॰वेक्ष॰।

निधाय ततः अश्मन्वती रीयते संरभध्वमित्येवमादिना मन्त्रेणाभ्युक्षमश्मानमग्निं च यञ्च पूर्वोक्तमुदपात्रमेतत्त्रयमपि संस्पृशन्ति सपिण्डाः।

१०. अधःशय्या भूमौ शयनम्। आसनमप्यध एव। अन्यत्र साहचर्यदर्शनात्। ब्रह्मचर्यमचाराश्लवणं तद्वर्जता। भावप्रत्ययनिर्देशो लिङ्गसङ्ख्ययोरविवक्षार्थः। ततश्च सर्वे सपिण्डास्तत्स्त्रियश्च व्रतानि कुर्युः। प्रत्यूहनमकरणं नित्यानां कर्मणां सन्ध्योपासनादीनां दृष्टार्थानां च यथाप्राप्तानां च कृषिनिकर्तनादीनाम्। किमविशेषेण। नेत्युच्यते। वैतानवर्जम्। वैतानं त्रेताग्निकर्म। तस्याप्रतिबन्धः[1]। कियन्तं कालमेतानि व्रतानि। उच्यते। एकरात्रमेकमहोरात्रमित्यर्थः। त्रिरात्रं वा। एवमेव नवरात्रं वेति विकल्पः। आ वा संचयनाद्व्रतानि। अस्थिसंचयनं वक्ष्यति। अपरपक्षे संचित्येत्यादिषु। आ वा तस्माद्व्रतानि भवन्ति। स्मृतिविहितस्य वचनमन्यथाकरणे प्रायश्चित्तार्थम्।

११. अघशब्देनात्र मरणमुच्यते। येष्वहःसु सपिण्डमरणं संवृत्तं तान्यघाहानि। कतमानि पुनस्तानि। मरणादारभ्यैकरात्रादीनि। यानि व्रतैर्व्याप्तान्युक्तानि तानि न वर्धयेयुर्नाभ्यधिकानि कुर्युः। कर्मानधिकारवत्तैर्न व्याप्नुयुरित्यर्थः। एतदनेनोच्यते[2]। यद्यपरपक्षो ऽन्तर्नवाहं[3] भवति तत आ वा संचयनादित्ययं पक्षो ऽङ्गी-

---

१ C तस्य प्रतिषेधः। २ A C (orig.) यनेनोच्यते B C (sec. h) अन्येनोच्यते।
३ B ऽर्वाक् नवाहं C orig. ऽमरं वाहं।

कर्तव्यः। अथ चेदूर्ध्वं नवाहान्नादर्तव्यः। वर्णाचयस्याप्येतदसंयोगविधानात्। इति ह स्माह कौषीतकिरिति स्वपक्षदृढीकरणार्थं श्रुतिप्रदर्शनम्।

१२. अरण्ये निखनन्तीति सूत्रच्छेदः। अपरपक्षः कृष्णपक्षस्तस्मिन् या अयुजो विषमसङ्ख्याका रात्रयो मरणादारभ्यैकत्रिपञ्चसप्तसु संचयनमस्थ्नां संगोपनं पूर्वं पलाशपुटे तन्त्रान्तरदर्शनात्।

१३. यं त्वमग्ने समदह इत्येताभ्यामृग्भ्यामुदकेन क्षीरमिश्रेणास्थीनि निर्वापयेत्। तापमुपशमयेदित्यर्थः। विगततापानामपि निर्वापणमविशेषात्[1]।

१४. शरीरशब्देनास्थीन्युच्यन्ते। तान्यनन्तरं पुराणे घटे प्रक्षिपेत्।

१५. उत्ते स्तभ्नामि पृथिवीं त्वत्परीत्यनेन मन्त्रेण तं घटं मृल्लोष्टेनापिदध्यात्।

१६. उच्छ्वञ्चस्व पृथिवि मा निबाधथा इत्यनेन मन्त्रे खाते सुरङ्गायामित्यर्थः। तस्यां निखाय प्रवेश्य ततः।

१७. उच्छ्वञ्चमाना पृथिवी सु तिष्ठत्वित्यनेन मन्त्रेण परिमिते ऽवदध्यात्। परिमितं चित्यकं कुलकं श्मशानमित्येको ऽर्थः। तच्च परिमितद्वारं क्रियते। तत्रास्थिकुम्भं सुरङ्गायां[2] प्रवेश्यावस्थापयेत्।

१८. यदेतत्संचयनं निखननोपलक्षितमेतदरण्ये कुर्वन्ति।

१९. अग्निभिः संस्कुर्वन्तीति सूत्रान्तः। उपलभ्यमानानि शरीराण्येवाहृत्य यथोक्ता क्रिया। शरीरेष्वदृश्यमानेषु पुरुषास्थि-

---

१ C निर्वापम्; in marg. वेप। २ C सुरङ्गयां A सुरङ्गायां।

समानसङ्ख्याकैः पलाशवृन्तैः प्रतिनिधिकरणम्। तदुच्यते। त्रीणि षष्टिशतानि पलाशवृन्तानि विन्यस्तव्यानीति वाक्यशेषः। कथमित्याकाङ्क्षित आह।

२०. वक्ष्यति। पुरुषाकृतिं कृत्वेति। तस्या आकृतेः शिरसि कर्तव्ये चत्वारिंशत्पलाशवृन्तानि निदध्यात्।

२१. ग्रीवायां कर्तव्यायां दश यथाप्रदेशं निदध्यात्।

२२. बाह्वोः कर्तव्ययोः शतं निदध्यात्। किं विशिष्टयोर्बाह्वोः। अंसान्वयोः। एकोऽसशब्दोऽसफलकवचनः। अपरोऽसनिर्धातुरनुशब्दपूर्वो गत्यर्थः। तेनैतदुक्तं भवति। अंसानुगतयोः अंसस्थितयोरिति यावत्[१]।

२३. उरःस्थले कल्पयितव्ये त्रिंशत्पलाशवृन्तानि निदध्यात्।

२४. जठरमुदरं तस्मिन् कल्पयितव्ये यथाप्रदेशं विंशतिपलाशवृन्तानि निवेशयेत्। पलाशवृन्तानि लौकिकेन शब्देन पलाशविटकान्युच्यन्ते।

२५. वृषणप्रदेशे षट् पलाशवृन्तानि अवस्थापयेत्।

२६. चत्वारि पलाशवृन्तानि शिश्ने कल्पयेत्।

२७. ऊर्वोः कर्तव्ययोः शतं पलाशवृन्तानि निवेशयेत्।

२८. द्वयोरपि जानुजङ्घाष्ठीवत्समुदाययोः त्रिंशत्पलाशवृन्तानि निदध्यात्।

२९. पादयोरङ्गुलीषु च सर्वासु यथाप्रदेशं विंशतिपलाशवृन्तानि निवेशयेत्।

---

१ II स्थान्।

२०. अविकलाङ्गे यजमाने प्रमीत एवं चोथि पद्दिग्नतानि। विकलाङ्गे ऽपि सञ्चयादानिराकृतेः प्रतिनिधिलात्।

२१. उक्तया पलाशवृन्तरचनया पुरुषाकृतिं कृत्वा तत ऊर्णासूत्रैः स्थूलास्थूलमध्यमैः स्नायुवत्परिवेष्ट्य क्रमेण यवचूर्णैर्मांसवद्धिभिन्नैः प्रलिप्य सर्पिषाभ्यज्यानन्तरमग्निभिर्दाहादिसंस्कारेण संस्कुर्वन्ति पुत्रादयः। एवमेव शाखान्तरविहितत्वात्। जीवतः कर्माणीत्युक्तम्। यदा पुनर्जीवत एव पत्नी म्रियेत ततो यजमानेन किं कर्तव्यमित्यत आह।

२२. अग्निन्याक्षो नियोगत्रयमुच्यते। पूर्वमारिण्या अग्निसंस्कारो ऽन्यानयनमाधानं[1] च। तत्र पूर्वमारिण्या अग्निसंस्कारायाथाकाम्यं वचनात्। अन्यानयनमर्थाचिन्नं पुनराधानं तु विधीयत इति। शांतपनेन वेति। संतापजैरित्यर्थः। संतापजैरितिकर्तव्यता[2] यजमानदाहविषया शतपथे पठ्यते। इहाप्यविरोधात्सैव द्रष्टव्या। इत्यमेव कुर्यात्तिष्ठ एव स्थालीरेष्टवै ब्रूयात्तासु गोमयानि च शुल्वकानि चावधाय नाना चिम्बग्निषु प्रवृञ्ज्यात्। ते ये ततः संतापादग्नयो जायेरंस्तैरेनं दहेयुरिति[3] (१२.५.२.२)। इतरेषां परित्यागः कृतार्थत्वात्।

---

१६.

१. परिधिकर्मेति वक्ष्यमाणस्य कर्मणो नामधेयम्। परिधि-

---

१ A पुनराधानं च। २ A C संतापजैरितिकृत॰ B not quite legible. ३ B दहेयुः।

मेध्यत्वं शान्तिरनिष्टान्तर्धानमित्येको ऽर्थः। तदर्थं कर्म परिधिकर्म। तद्भूतापवर्गं कर्तव्यम्। अतान्युक्तान्यधःशयादीनि। तदन्ते प्रेतकर्म कृत्वा प्रत्येनसा सपरिवारेण गृह्ये ऽग्नौ कर्तव्यम्। प्रत्येना मृतस्य प्रत्यनन्तरो रिक्थभागुच्यते। कथं कर्तव्यमित्यत आह।

२. अनड्वान् बलीवर्दः। तदीयं चर्म रोहितं वर्णतः। तत्पश्चादग्नेरुदग्ग्रीवं प्राग्ग्रीवं वोपरिलोम चोपस्तीर्य तस्मिन्रिक्थभाजः सर्व एवोपविशन्ति। दर्भेषु चोदगग्रेषु प्रागग्रेषु[1] वा।

३. जुहोतीति सूत्रान्तः। ये चर्मण्युपविष्टास्तांश्चाग्निं[2] चान्तरेणास्थाने घृताभ्यक्तं स्थापयित्वेदमन्यत् प्रतिश्रुतहोमविधेरभ्यधिकम्।

४. अन्या रथाङ्गेन प्रविद्धास्ताः परिधिवदाक्रमय्यस्य पश्चाद्दक्षिणत उत्तरतश्च कृत्वावस्थाप्येत्यर्थः।

५. कृत्वेति वर्तते। शमीमयमनियतसङ्ख्याकमिध्मनार्थं पालाशं वेध्मं च तूष्णीं प्रोक्षितमग्नौ प्रक्षिपेत्।

६. वरणविकारेण कंसविकारेण वा स्रुवेण वक्ष्यमाणा आज्याहुतीर्जुहोति।

७. दक्षिणं पाद तिर्यञ्चमितरस्य जङ्घाया अधो न्यस्येतरं चैवमेवेतरस्य एवमासीनः कृतोपस्थ उपस्थकृत् उच्यते। इत्थंभूत ऋत्विक् जुहोति। किं चान्यत्। समन्वारब्धेषु यानि कर्माणि प्रत्येनसा सहोपदिष्टानि तेष्वन्वारब्धेषु। चशब्दात् कृतोपस्थेष्वन्वारब्धेष्विति लभ्यते। कतमे पुनस्ते आकृतिमन्त्रा इत्याकाङ्क्षित आह।

८. इमं जीवेभ्यः परिधिं दधामि इत्येवमादिकाम्। याजु-

1 C om. प्रागग्रेषु वा। 2 A C तांश्चाग्निं रिक्थं चा°।

वेदिकां[1] परेतु मृत्युरित्येवमादिकां द्वितीयाम्। अप नः शोशुच-दघमिति सप्तम्यै नय यस्त्वा हृदा त्वं नो अग्न अधरादित्येता[2] आरण्ये ऽग्न्यन्वाधान उक्तास्ता इहातिदिष्टा यायारण्ये इग्न्यन्वाधान इति।

८. तूष्णीमित्येवमन्तं सूत्रम्। खण्डशस्तु व्याख्या क्रियते। इादश कृत्वा प्राक् स्विष्टकृतो वक्ष्यमाणमित्येवमर्थं सङ्ख्यावचनम्।

१०. यथाज्यानुपूर्वं भवन्तीत्याभ्यामृग्भ्यां दक्षिणसंयमनु चर्मोपविष्टानीक्षते।

११. अञ्जनं चैककुदादि इत्येन संमृश्य[3] ततः।

१२. दर्भशलाकाभिः स्त्रीणामविधवानां चर्मण्युपविष्टानाम-क्षीण्यनक्ति दक्षिणं पूर्वं सव्यमुत्तरमिमा नारीरविधवाः सुपत्नीरि-त्यनेन मन्त्रेण।

१३. प्रतिस्त्रियमेवं कुर्यात्।

१४. उत्तिष्ठ ब्रह्मणस्पत इत्याभ्यामृग्भ्यां शावको ऽनुमन्त्रयते। प्रत्येनःप्रभृतीनुत्तिष्ठतो ब्राह्मणस्य दक्षिणं बाहुमन्वारभ्यान्। एवं च सति नैर्ब्राह्मणस्य दक्षिणं बाहुमन्वारभ्योत्थातव्यमिति गम्यते।

१५. अनडुहो वा पुच्छमन्वारभ्यानुत्तिष्ठतो ऽनुमन्त्रयते।

१६. अनड्वान् प्रकटवाहः। नवं वस्त्रम्। कांस्यस्य स्रुवो यदि हतः स एव देयः।

---

[1] B om. याम्यांवेदिकां। [2] C अधरादिति वा इत्यभितितेता आरवे। [3] B संमृश्य।

१७. दक्षिणतो ऽग्नेर्वस्त्रहिरण्यादिवित्तमवस्थाप्य[1] प्रत्येनाः पेत्वकर्णापाकरणसमर्थैः त्रिः प्रदक्षिणं धनं करोति।

१८. यदेतत्परिधिकर्माक्रमेतत्प्रत्येनस्मि सति भवति।

---

## १७.

१. गार्ह्यकर्मप्रसङ्गेनार्थं[2] शूलगवाख्यः काम्यः शाखापशुरिहोच्यते। श्रुत्यन्तरोक्तत्वात्। स्वशाखायामप्यथ यत्त्वेरग्निभिर्यजमानं संस्थापयन्तीत्यस्यानन्तरं (कौ० ब्रा० ६.१०) प्रजापतिः प्रजाःसृष्ट्वा-मस्तपो ऽतप्यतेत्युपक्रम्य भवशर्वादीनां नाम्नां शूलगववपाहोममन्त्रदृष्टानामर्थवाददर्शनादिहैव सूत्रकारेणोक्तः। तत्र रुद्रं गवा यजत इत्यनेन श्रुत्यनुकरणेन रुद्राय गोद्रव्यको यागो विधीयते। स्वस्त्ययनायानर्थोपशमनायेत्यर्थः।

२. प्रसिद्धा ह्यस्य शाखान्तरेष्वप्येषा संज्ञा। रौद्राश्च भूरिशः शूलाद्यो रोगाः। या ते दिद्युदवसृष्टा दिवस्परीत्येवमादिभिर्मन्त्रलिङ्गैस्तत्रतत्र दृश्यन्ते। तन्निवारणार्थं चैतत्कर्म भवतीत्येतदपि संज्ञया ज्ञापितं भवति। इतिकर्तव्यतामिदानीमाह।

३. शुक्लपक्षे शुक्लपक्ष इत्यर्थः। उपोष्येति पूर्वेद्युर्व्रतं यथोक्तं कृत्वा। पुण्ये नक्षत्रे पुष्यादौ। प्रागुदीच्यां दिशि एतत्कर्म भवति।

४. क्रमेणैवमादीन्पदार्थान् कृत्वा नियुनक्ति मन्थनमावसथ्य-

---

१ C वस्त्रहिरण्या०। २ II गार्हपत्य० C गार्ह्ये।

६. उपस्तीर्य वपामवधाय ततोऽभिघारणमस्या आज्येन कुर्यात्।

७. यावतामहमित्येवमादिना मन्त्रेण स्वाहाकारान्तेन वपां हुत्वा ततः।

८. आहुत्यनन्तरं पलाशपर्णानि[1] तस्मिन्नेवाग्नौ प्रक्षिपेत्।

९. वपाश्रपण्यौ चानुप्रहरेदाध्वर्यवोक्तलक्षणे। तथैवानुप्रहरेद्यथा तेषामुक्तम्।

१०. दशांयत इत्यनेन मन्त्रेण वपाश्रपण्यनुप्रहरणादनन्तरमुत्तरामाज्याहुतिं हुत्वा तथैव पर्युक्षति। यथा पूर्वमुक्तं शिवंशिवमिति त्रिः पर्युक्षति। आज्यग्रहणमसंदेहार्थम्। उत्तराग्रहणमन्येष्वपि शाखापशुषु भावार्थम्।

११. स्थालीपाकग्रहणं तद्धर्मप्राप्त्यर्थम्। पश्चिमाग्निग्रहणं पूर्वोऽग्निरवधिकृतत्वान्मा भूत्।

१२. तस्यैवाग्नेरुत्तरतोऽवदानानि श्रपयेत्। मांसमिति नोक्तम्। कथं नामावदानधर्मा आध्वर्यवोक्ता भवेयुरिति।

१३. यो ऽसौ स्थालीपाकः शृतः तं च यूषं च। यूषशब्देन रसोच्यते। मांसमङ्गेभ्योऽवखण्ड्यास्यां[2] च संस्कृतं पाठक्रमेण पात्रान्तरे[3] समस्य जुहूा स्थालीपाकधर्मवत्पूर्वेऽग्नौ शंयोःशंयोरिति मन्त्रेण[4] त्रिः पर्युक्षणं कृत्वा जुहोति। कुत एतत् पूर्वेऽग्नाविति। अग्नौ पश्चिम इति वक्ष्यमाणत्वात्।

---

१ [illegible] पलाशादि। २ C स्वखण्ड्यावखड्य B and A are corrupt. ३ A inserts एकदेशतः। ४ From शंयोः to कृत्वा om. in C.

१६.

१. स्वाहाकारान्तैः पञ्चभिर्मन्त्रैः पञ्चाहुतयः। स्थालीपाकधर्मेण जुहुयात्।

२. शंयोःशंयोरिति त्रिः पर्युक्षेत्यर्थः।

३. तान्येवावदानानि स्थालीपाकादीनि। न तु आघनीमेव केवलाम्। न च संनीतावमिश्रं संनीयेति वचनात्।

४. जुहोतीति शेषः।

५. अत्रापि जुहोतिधर्मेणैव। स्वाहाकारान्तैः पञ्चभिर्मन्त्रैः पञ्चैवावदानधर्मविशिष्टा[1] आहुतीर्जुहोति।

६. शंयोःशंयोरित्यहुते हुते चाविशेषात्[2]।

७. अनुदिशतीति सूत्रान्तः[3]। पश्चिमादग्नेरारभ्य यावद्विकर्तनप्रदेशस्तावत्प्रागुदीच्यभिमुखानि[4] षट् पलाशपत्राणि मध्यमानि निदध्यात्।

८. तेषु पर्णेषु लोहितमिश्रमूवध्यमवदध्यात्।

९. तदूवध्यं लोहितमिश्रं रुद्रसेनाभ्यो ऽनुदिशेत्। अनुदेश इदमस्येदमस्येत्यवधार्य समर्पणम्।

१०. षडेता रुद्रसेनाः। षडेव पर्णानि निहितानि। तच यथासङ्ख्यमनुदेशो युज्यते। आघोषिण्य इति स्त्रीलिङ्गामन्त्रितबहुवचनान्तः साकाङ्क्षः। तथा प्रतिघोषिण्यः। एवं संघोषिण्यः। तथा विचिन्वत्यः। एवं श्वसनाः। षष्ठस्तु निराकाङ्क्षो मन्त्रः। तदीयो

---

१ A C om. धर्म। २ C om. चाहुते। ३ MSS. om. अनु। ४ C (in marg.) षा instead of च।

वाक्यशेषः सर्वेष्वनुवक्तव्यस्तुल्ययोगित्वात् । अतश्चैवं प्रयोगः । आघोषिण्य एष वो भागस्तं जुषध्वं स्वाहा । एवमितरेष्वपि द्रष्टव्यम् ।

११. रुद्रं मन्त्रवर्णात् । यजमानस्य यस्य प्रकृतो[1]ऽनुपदेशकः ।

---

## २०.

१. भूपत इत्येवमादिना मन्त्रेण नम इत्येवमन्तेन कर्तृयजमानौ प्राङ्मुखौ रुद्रमुपतिष्ठेते । असंयुक्तं प्रधानस्येति न्यायात्[2] ।

२. कद्रुद्राय प्रचेतसे । इमा रुद्राय तवसे कपर्दिने । आ ते पितर्मरुतां सुम्नमेतु । इमा रुद्राय स्थिरधन्वने गिरः । एतानि सूक्तानि रुद्रस्यैवोपस्थाने विनियोक्ष्यामि । सूक्तानीति वचनात् यद्यपि प्रथमे सूक्ते तिस्रः सौम्यस्तथापि सकलस्यैव विनियोगः ।

३. शेषस्य गवादिदानम् । प्राक् सव्ये पाणौ ये कुशास्तान्दक्षिणेनाग्ने संस्थेत्येवमादिकर्मणः (१.८.१२) । न त्वन्या आज्याहुतयो गृह्योक्ताः परिसंख्यातत्वात्[3] । कुशानुप्रहरणं[4] समिदाधानं च पूर्वेऽग्नौ । तत्राहुतिभूयस्त्वात् । अपरे "कुशानुप्रहरणमन्यतरस्मिन्निच्छन्ति[5]" । समिदाधानं तूभयत्र । पर्युक्षणं नेच्छन्ति । हूतत्वात् । न्याय्यमेव[6] तु नित्यं पर्युक्षणम् । अतुल्यत्वादितरस्य । अत्र पद्धतिः ।

पूर्वेद्युरुपोष्य प्रातरावसथ्यं कृत्वा । तमरण्योः समारोप्यायं ते योनिरिति यथोक्तम् । ततः प्रागुदीचीं दिशं गत्वा दीर्घचतुरस्रे उपलिप्ते पश्चार्धेऽग्निं मथित्वा । ततो लेखाकरणाभ्युक्षणाग्निप्रणयन-

---

१ B प्रकृतौ । २ B न्यायात् । ३ B °त्वात् । ४ C कुशानुप्र° । ५ C अन्यतरस्मिन् । ६ A न्याय्यमेव ।

परिसमूहनादि। ततस्तस्याग्निप्रणयनम्। तस्याप्येषैवेतिकर्तव्यता। अस्यैव दक्षिणतो ब्रह्मयजमानावुत्तरतः प्रणीताः। अत्रैव स्तरणं पवित्रच्छेदनमभ्युक्षणं ताभ्यां पर्युक्षणमाज्यस्याज्यादानमधिश्रयणं पश्चिमे ऽग्नौ। उद्वासनमुत्पवनं प्रोक्षणमेतद्गृह्योक्तं कृत्वा तत आज्यस्य बर्हिष्यासादनम्। पूर्वस्याग्नेः पुरस्तात्पलाशशाखानिखननं। पशोरेकदर्भेनोपस्पर्शनमुपाकरणम्। प्रोक्षणं प्रोक्षणावशिष्टाभिरद्भिः। द्विगुणरशनया व्यामया कौश्या पाशं कृत्वान्तराशृङ्गमभिदक्षिणं बद्ध्वा नियोजनं यथासूत्रम्। तत उल्मुकेन त्रिः प्रदक्षिणं पर्यग्निकरणम्। पशोरालम्भनस्य च ततो यथासूत्रम्। पर्युक्षणान्ते सव्येन कुशानादाय दक्षिणेन मूले स्रुवं विष्णोर्हव्यं रक्षेति। ततो या तिरश्चीत्यादि यथासूत्रम्। अवदानानामाध्वर्यवः क्रमः श्रपणं च। दक्षिणादानं प्राक् कुशप्रतिपत्तेः।

४. अमन्त्रिकाः पाकयज्ञिका आवृत उपाकरणप्रोक्षणपर्यग्निकरणरूपा अतिदिश्यन्ते। यथायथमुपदेशस्ततो ग्रहीतव्याः। आध्वर्यवे च सः।

५. यद्यपि श्रौते पशौ यूपवृक्षविशेषाः[1] प्रमाणविशेषाश्च अभ्यञ्जनादयश्चाग्निनियमाश्च सन्ति तथापि शाखापशुषु पलाशशाखैव। इति देवतायै वपामिति। इतिकरणस्तद्धर्मप्रापणार्थः। देवतावचनं यावतामस्तमीय इत्यस्य[2] निवृत्त्यर्थम्। देवतायै हविः स्विष्टकृते चेति वचनात् वनस्पतियागवपापशुपुरोडाशनिवृत्तिरपि[3]। ननु केन

---

१ A यूपे instead of यूपः। २ B यथे C यर्थः instead of यस्य। ३ A om. वपापशु B om. वपा C has वपापशुपुरोडाशयोर्नि-।

वनस्पतियागपशुपुरोळाशयोः शाखापशुषु प्राप्तिः। उच्यते। श्रौता अपि शाखापशवो[1] ऽवकीर्णिप्रभृतीनां लौकिके ऽग्नौ भवन्ति। तत्रास्ति प्राप्तिः[2]। ननु भूमौ पशुपुरोळाशश्रपणं[3] कात्यायनेनोक्तमवकीर्णिपशोः। सत्यम्। मनुना तूक्तम्। (११.११८)।

अवकीर्णी तु काणेन गर्दभेन चतुष्पथे।
पाकयज्ञविधानेन यजेत नैरृतं निशि॥ इति॥

ननु[4] पाकयज्ञविधानेन पशुपुरोळाशवनस्पत्योः कुतः प्राप्तिरिति। उच्यते। कात्यायनीये प्रत्यक्षा श्रुतिः। मानवे त्वानुमानिकीति। सत्यमेव। तथापि वनस्पतेः प्रतिषेधार्थमेतद्वचनम्। देवतायै हविः स्विष्टकृते चेति। गार्ह्ये तु नानया परिसङ्ख्यया निवार्यते। अप्रकृतत्वात्तस्य। संनिपत्योपकारकमपि शूलगवोक्तमन्येषां पशूनां न प्रतिषिध्यते। कुतः। आरादुपकारकाणां परिसङ्ख्यानात्। अतो ऽन्येष्वपि पशुषु यथाप्राप्तं कर्म लिख्यते। तत्रार्घ्यपशुवर्जं पूर्वेद्युरुपवासः आवसथ्यसमारोपो मन्थनं प्रणयनं परिसमूहनं ब्रह्मयजमानयोरुपवेशनं प्रणीताप्रणयनं स्तरणं पवित्रच्छेदनं आज्यस्थाल्यादानं पवित्रे ऽग्नावधिश्रयणमुदासनमुत्पवनं प्रोक्षणं शाखानिखननं उत्तरतस्तस्याः पशोरुपस्थापनं तृणेनोपस्पर्शनं अमुष्मै त्वा जुष्टमुपाकरोम्यमुष्मै त्वा जुष्टं प्रोक्षाम्यमुष्मै त्वा जुष्टं नियुनज्मीति यथादेवतं पलाशशाखायां नियोजनं पर्यग्निकरणं उदग्नयनं संज्ञपनं पुरस्तान्नाभेर्वपोत्खेदनं वपाश्रपण्योः प्रच्छादनं प्रक्षालनं

---

१ A C om. शाखा। २ A om. प्राप्तिः। ३ A om. पशु। ४ B C अतः instead of ननु।

पूर्वे ऽग्नौ श्रपणं अभिघारणं उद्वासनं नमो विष्णोर्हस्तो ऽसीति कुशस्रुवयोरादानं आघारौ महाव्याहृतिहोमः ततस्त्रिषु पलाशपर्णेषु संक्षेपूपस्तरणं[1] वपावधानं अभिघारणं ततो ऽमुष्मै स्वाहेति देवतामुद्दिश्य होमस्ततः पलाशानुप्रहरणं वपाश्रपण्योश्च ततः पश्चिमे ऽग्नौ स्थालीपाकश्रपणं उत्तरतो ऽवदानश्रपणं स्थालीपाकयूपमांसाज्यादीनां संनयनं ततः स्रुचावदानधर्मेणामुष्मै स्वाहेति देवतामुद्दिश्य होमस्ततः स्विष्टकृत्ततो महाव्याहृतयः ततः सर्वप्रायश्चित्तं ततः प्राजापत्यान्तं कृत्वा ततो दक्षिणादानं ततः सव्ये पाणौ ये कुशा इत्यादि अग्नेर्वासो ऽसीति ततः [2]पर्युक्षणमिति।

६. ये पश्वर्थाः स्थालीपाका येषां वा पशुना सह विकल्पः यथाष्टकायां गोपशुरजपशुः स्थालीपाको[3] वेति (सू० ३.१४.३) तेषामाग्नेयः सौम्यश्चाज्यभागौ। प्राप्तयोरेवाज्यभागयोः पुनर्वचनं शाखापशुषु प्रतिषेधार्थम्। देवतायै वपामिति चरोरुपरि या त्वगिव वा वपाकारसामान्येन[4] वपोच्यते। तां देवतायै जुहुयात्। देवतायै हविः स्विष्टकृते चेति परिसंख्यानात् स्थानापत्तेः प्राप्तानां पशुधर्माणां प्रतिषेधार्थं। आव्याहुतिश्चैवंप्रकारेष्वेव स्थालीपाकेषु स्विष्टकृदनन्तरं पाठक्रमादनुमतये स्वाहेत्यनेन मन्त्रेण स्रुवः पात्रमिति गार्ग्येषु वचनात् स्रुवेण होतव्या।

---

१ A सीवितेषु। २ B ins. समिदाधानं। ३ B पशुः स्था०। ४ A वा वपाकारसामान्येन वपोच्यते।

भिर्मन्त्राव्याहृतिभिश्चतुर्थं पिबेत्। प्राशनत्रयस्य पश्चान्मधुपर्कशेषस्य कियतो ऽपि पानं कृत्वा ततः।

१६. मधुपर्कोच्छिष्टं ब्राह्मणाय प्रदद्यात्। लिङ्गमत्राविवक्षितम्।

१७. सर्वं वा मधुपर्कं पिबेत्।

१८. अप्सु वा प्रक्षिपेदिति शेषप्रतिपत्तिपक्षत्रयम्।

१९. शं नो देवीरभिष्टय इत्यादिकाभिश्चतसृभिर्वं गिमतर:-स्थानमभिमृशेत्।

२०. समानं तुल्यमित्यर्थः। ब्रह्मत्वविहितेन वा याजमान-विहितेन वा प्राणसंमर्शनमविशेषात्। अत एव च समानमुरोऽभि-मर्शनादीति नोक्तम्। शाङ्खचर्याद्याजमानेनैव [1]नियमो मा भूत्।

२१. समानं चमन्द्राद्याजमानविहितेन। अन्यथासंभवात्[2]।

२२. अनन्तरमर्घदाता गौरित्येव वक्तव्यम्। यद्यपि गोछाग-स्थालीपाकानां विकल्पितानामन्यतमस्योपादानं कृतं तथापि गौर्गौ-रित्येवं वाच्यम्। अतः प्रागेतस्माद्गोमवदनात्तूष्णीमर्घं आसीत।

२३. इयं गौस्त्वदर्थमस्माभिर्दातव्येत्यनेनाभिप्रायेण गौरित्यर्घ्यं इममर्थं बोधितः।

२४. अर्घ्यः प्रतिब्रूयात्। ओं कुरुतेति। यथाभिलषितं[3] संपादयतेत्यर्थः। ओमित्येतस्य श्रुतिरभ्यादानार्थत्वात्।

२५. माता रुद्राणां दुहिता वसूनामित्येवमादिकामृचं जपित्वा ततः ओमुत्सृजत तृणान्यत्तु एवं वा ब्रूयात्।

---

१ B नम, इति। २ A अन्यथासं॰। ३ B ॰लषितम् A ॰लषितं।

२६. कूर्चादीनि यथाकालमर्घप्रदो[1] वेदयेत । त्रिस्त्रिर्वेदयेतेति तन्त्रान्तरात् ।

द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारसदाचरणं चायुष्यमिति ।

## इति शाङ्खायनश्रौतसूत्रभाष्ये चतुर्थो ऽध्यायः समाप्तः ।

---

शाङ्खायनकसूत्रस्य सम्यं शिष्यहितेच्छया ।
वरदत्तसुतो भाष्यमानर्तीयो ऽकरोत्सवम्[2] ॥

---

१ A. अर्घपायप्रदो B अर्घाघार्घप्रदो । २ om. in A ( B? )

## अथ पञ्चमो ऽध्यायः ।

१.

[1]उक्तानि प्रागैष्टिकानि कर्माणि[2] सौमिकानि कर्माणि । सोमस्यावसरः । तदर्थमाह ।

१. श्रुताध्ययनग्रहणधारणश्रौतस्मार्तकर्मानुष्ठानवन्तो ब्राह्मणा ऋषय इहोच्यन्ते । कुतः । को न ऋषिर्भविष्यतीति न एतानननूचानानपश्यन्निति निरुक्तदर्शनात् । शतपथश्रुतेश्च । यो वै ज्ञातो ऽनूचानः स ऋषिरिति । तेषां पुत्रा आर्षेयास्तान्पूनस्तरुणाननूचानानध्ययनव्याख्यानक्षमानृत्विजो यजमानो वृणीते । यज्ञव्यापारायाभिप्रपादयतीत्यर्थः । सोमेन यक्ष्यमाणः । सोमेन यक्ष्य इत्यभिप्रवृत्तः[3] । (आप॰ग॰ १.२३.१) ।

२. चतुरो महर्त्विजो वृणीते । सर्वान् वा सदस्यसप्तदशान् । उभयं शाखान्तरात् ।

३. चन्द्रमा मे दैवो ब्रह्मा एतदुपांशु । त्वं मानुष एतदुच्चैर्ब्रूयात् । एवं ब्रह्माणं वृणीते मन्त्रलिङ्गात् ।

४. एवं सर्वान् वक्ष्यमाणानृत्विङ्नामान्तं मन्त्रमुपांशूक्त्वा शेषमुच्चैरिति ।

---

१ B ins. अथ । २ B C add सौमिकानि कर्माणि, C has ऐष्टिकानि कर्माणि in marg. ३ C ॰आप॰ in marg. instead of ग ।

५. उद्गातारं वृणीते मन्त्रवर्णात् । नो दैव इति द्वियजमानके । नो दैव इति बहुयजमानके[१] । एवं सर्वेषु वरणमन्त्रेषु पूर्वेषु चोत्तरेषु च ।

६. अनेन मन्त्रेण होतारं वृणीते मन्त्रवर्णादित्युक्तम् ।

७. वायुर्मे इत्येवमादिना मन्त्रेणाध्वर्युं वृणीते ।

८. प्रजापतिर्मे इत्येवमादिना मन्त्रेण सदस्यसंज्ञकं वृणीते । प्रजापतिर्नो दैव इति द्वियजमानके । नो दैव इति बहुयजमानके । अयमुपद्रष्टा[२] भवति । सर्पत्सु न शून्यं सदस्कुर्यादिति छन्दोगानाम् ।

९. ऋतवो [redacted] इत्येवमादिना मन्त्रेण होत्राशंसिनो वृणीते । होत्रका होत्राशंसिन उच्यन्ते ।

१०. भर्गो म इत्येवमादिकं मन्त्रं वृत ऋत्विक् जपित्वानन्तरं जपात्पृच्छति यदि पूर्वं न ज्ञातो यो ऽयं यज्ञः कर्तव्यः । किमय-महीन उत नेति । कश्चिच्छब्दः किंशब्दस्यार्थे । अनुदेश्यः स उच्यते यः कृत्वान्यस्मै जीवते मृताय वा अनुदिश्यते । यथा कात्यायनेनोक्तम् । उखा चेद्विभिद्येत म्रियेत सोपकरणमाहिताग्न्याहृता दग्ध्वा नेदिष्ठर्षिं चित्वा तमस्मा अनुदिशेदित्येक इति[३] । न्यस्ता-र्त्विज्यस्तु न्यस्तं परित्यक्तमार्त्विज्यं यस्मिन्नन्येन केनचिद्यजमानस्य दोषेण । नीतासु दक्षिणासु यः शेषः स नीतदक्षिणो यज्ञशेषः । एवं दृष्टादृष्टदोषपरिहारार्थम् । यद्येतेषामन्यतमो न भवति ततः प्रतिशृणोति । इतरथा प्रत्याचष्टे । प्रतिश्रवः क्रियाभ्युपगमः । प्रत्याख्यानं तद्विपर्ययः ।

---

१ B ins. सर्वेषां । २ C अयमपि द्रष्टा । ३ का० २५. ६४ १।

## २.

१. ऋत्विग्वरणादनन्तरं देवयजनजोषणम्। महर्त्विजो यजमानस्य प्राक्प्रवणं देवयजनं जोषयेरन्। शाखान्तरात्।

२. पूर्वोत्तरयोर्दिशोर्यदन्तरालं तदवनतं देवयजनं यशस्कामस्य कुर्यात्।

३. यस्मिन्देवयजने स्थितो होता सामिधेन्याद्यनुब्रुवन्नाहवनीयमादित्यमपश्यन्नदीतडागादिष्ववस्थिताः पश्येत्तद्ब्रह्मवर्चसकामस्य देवयजनं भवति।

४. शुक्लपक्षे दीक्षाप्रक्रमः। पुण्ये नक्षत्रे पुण्यादौ समापनं च सोमस्य।

---

## ३.

१. अपराह्णे दीक्षणीयासंज्ञका अग्नाविष्णुदेवताका इष्टिर्भवति। संज्ञाकरणं चित्रविधि[1] दीक्षणीयेत्येवमाद्यर्थम्।

२. नियमार्थं वचनम्। पूर्वकारिवशाद्धविरन्तरे ऽपि।

३. पञ्चदश सामिधेनीरन्वाहेति श्रुतेः।

४. इष्टिर्विशिष्यते। उपांशुहविरियमिष्टिर्यच्चापि बहूनि हवींषि भवन्ति।

५. मेद्धो अग्न इमो अग्न इति विराजौ स्विष्टकृतो याज्यानुवाक्ये भवतः शाखान्तरात्[2]।

---

१ A ins. दीक्षणीया पूर्वाह्णे। २ C om. शाखान्तरात्।

६. नित्ये वा स्विष्टकृतो याज्यानुवाक्ये भवतः। विराजौ स्विष्टकृतो वेति सूत्रे कर्तव्ये विराण्नित्ययोस्तुल्यताप्रज्ञापनार्थं सूत्रभेदः। अतश्च यत्र यातयामत्वदोष आशङ्क्यते तत्राविनियुक्तयोः क्रिया सिद्धा भवति।

७. *उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण* इदं मे देवा हविर्जुषन्ताम्। एता इडायां तिस्र आशिषः। एतासां स्थाने ऽसौ यज्ञपागुर उद्वचमग्रीव इत्येतानि[1] षट् पदानि भवन्ति। उपहूतो ऽयं यजमान इत्यस्य प्राकृतस्यैव पाठः कर्तव्यः। इतिकरणस्य विस्पष्टार्थः। इडायामुक्तो विशेषः। सूक्तवाके उच्यते। उत्तरां देवयज्यां भूयो हविष्करणमायुः सुप्रजास्त्वं दिवं धामेति पञ्चाशिषो नामधेयग्रहणानन्तराः। तासां स्थाने ऽसौ यज्ञपागुर उद्वचमग्रीवेति षट् पदानि भवन्ति। तथा[2] वक्ष्यमाणसूत्राभिप्रायेण यजमाननामधेयग्रहणमुत्सृज्य तस्मात्पूर्वं पदत्रयं गृहीत्वा सूत्रकारेण प्रयोगः प्रदर्शितः। आशास्त इति चावसानार्थं पठन्ति। एवं व्यवस्थितमिडायां सूक्तवाके च कुर्यात्। प्राकृतीदवनिक्ता-पुरोडाशेडायाः। तृतीयसवने भवा तार्तीयसवनिकी। पुरोडाशेडा सवनीयपुरोडाशसंबन्धिनी इडा। *प्राक् तस्मादसुर उद्वचमग्रीवे*-त्येवमादि यथोक्तं कर्तव्यम्।

८. वक्ष्यत्याग्नेयः सवनीय इत्यादि। अतस्तद् ये इष्ट-कालेषु चोदकप्राप्तं यजमाननामधेयं प्रतिषिध्यते।

९. इयं दीक्षणीया इष्टिः पौर्णमासवद्भवति। तदेव

१ A C om. इति। २ B तथा।

श्रुतत्वात्। आहवनीयोपस्थानमप्रतिषिद्धमासीत्तदथनेन प्रतिषिध्यते। चशब्दादयमपि दीक्षणीयाधर्मो न केवलं पौर्णमासीविकारादयः।

---

४.

१. दीक्षणीयानन्तरं नवनीताक्तं स्नाञ्जनं निर्वृत्तवापनवाचमं त्यक्ताङ्गुलिं यजमानं शालां प्रवेश्याध्वर्युरौद्ग्रभणानि जुहोति। तमध्वर्युमन्वारभ्य मनो म इत्यादिकैः पञ्चभिर्मन्त्रैः पञ्चैवाहुतीरनुमन्त्रयेत। याजमानमेतच्च चौचम्।

२. एतैरेव पञ्चभिर्मन्त्रैः।

३. एकदीक्षे च यज्ञे वक्ष्यमाणमुपस्थानमौद्ग्रभणानन्तरं कुर्यात्। एतदपि याजमानं चशब्दात्।

४. मनो दीक्षामित्येवमादिना मन्त्रेणाहवनीयमुपतिष्ठत इति वाक्यशेषः।

५. वाचं दीक्षामित्येवमादिना मन्त्रेण गार्हपत्यमुपतिष्ठते।

६. प्राणमित्येवमादिना मन्त्रेण दक्षिणाग्निमुपतिष्ठते।

७. बहवो दीक्षासंख्याविकल्पाः शाखान्तरेषु। तदभिप्रायेणोक्तम्। अपरिमिता दीक्षा इति। दीक्षाधर्मयुक्तान्यहानि दीक्षा इति उच्यन्ते। तासां दीक्षाणामपवर्गे परिसमाप्तावित्यर्थः। [1]प्रायणीयसंज्ञका इष्टिर्भवति। इष्टिग्रहणं विस्पष्टार्थम्।

---

१ A ins. यज्ञः श्रोभूते।

५.

१. यजतीति वाक्यशेषः। हविष्पदेभ्यो याज्यानुवाक्यानियमार्थः।

२. चोदनानुपूर्व्येण याज्यानुवाक्यायुगलान्याह। पथ्यायाः स्वस्तेः पुरोनुवाक्या स्वस्ति नः पथ्यासु धन्वसु। याज्या स्वस्तिरिद्धि प्रपथे श्रेष्ठा।

३. आग्नेयस्य पुरोनुवाक्याग्ने नय सुपथा राये अस्मान्। याज्याग्ने त्वं पारया नव्यो अस्मान्।

४. सोमस्य पुरोनुवाक्या त्वं सोम प्र चिकितो मनीषा। याज्या या ते धामानि हविषा यजन्ति।

५. सवितुः पुरोनुवाक्या तत्सवितुर्वरेण्यं। याज्या य इमा विश्वा जातानि।

६. अदितेः पुरोनुवाक्या सुत्रामाणं पृथिवीं द्यामनेहसम्। याज्या महीमू षु मातरं सुव्रतानाम्।

७. इयं प्रायणीया पञ्चदशसामिधेनीका भवति।

८. अस्या एवापरो धर्म उपांशुहविष्ट्वम्।

९. चोदकप्राप्तयोः प्रतिषेधः शाखान्तरात्।

१०. त्वां चित्रश्रवस्तम इत्युक्तः पुरोनुवाक्या। यदाहितं तदग्नय याज्या।

११. शंय्वन्ता प्रायणीयेति श्रुतेः। एतावन्तो वैशेषिकाः प्रायणीयाधर्मा नान्य इति वशब्दः। अतस्त्र ये ऽस्मिन् प्रकरण उक्ताः प्रायणीयाधर्मास्त एवोदयनीयायामतिदिश्यन्ते। नान्ये आग्निपामनिर्वचनमित्येवमादयः।

श्रुतत्वात्। आहवनीयोपस्थानमप्रतिषिद्धमासीत्तदप्यनेन प्रतिषिध्यते। चशब्दादयमपि दीक्षणीयाधर्मो न केवलं पौर्णमासीविकारादयः।

---

४.

१. दीक्षणीयानन्तरं नवनीताक्तं कृताञ्जनं निर्वृत्तवापनवापनं त्यक्ताङ्गुलिं यजमानं शालां प्रवेश्याध्वर्युरौद्ग्रभणानि जुहोति। तमध्वर्युमन्वारभ्य मनो म इत्यादिकैः पञ्चभिर्मन्त्रैः पञ्चैवाहुती-रनुमन्त्रयेत। याजमानमेतच्च चोक्तम्।

२. एतैरेव पञ्चभिर्मन्त्रैः।

३. एकदीक्षे च यज्ञे वक्ष्यमाणमुपस्थानमौद्ग्रभणानन्तरं कुर्यात्। एतदपि याजमानं चशब्दात्।

४. मनो दीक्षामित्येवमादिना मन्त्रेणाहवनीयमुपतिष्ठत इति वाक्यशेषः।

५. वाचं दीक्षामित्येवमादिना मन्त्रेण गार्हपत्यमुपतिष्ठते।

६. प्राणमित्येवमादिना मन्त्रेण दक्षिणाग्निमुपतिष्ठते।

७. बहवो दीक्षासंख्याविकल्पाः शाखान्तरेषु। तदभिप्रायेणो-क्तम्। अपरिमिता दीक्षा इति। दीक्षाधर्मयुक्तान्यहानि दीक्षा इति उच्यन्ते। तासां दीक्षाणामपवर्गे परिसमाप्तावित्यर्थः। [१]प्राय-णीयसंज्ञका इष्टिर्भवति। इष्टिग्रहणं विस्पष्टार्थम्।

---

१ A ins. यथा चोभूते।

## ५.

१. यजतीति वाक्यशेषः। हविरुपदेशो याज्यानुवाक्यानियमार्थः।

२. चोदनानुपूर्व्येण याज्यानुवाक्यायुगलान्याह। पथ्यायाः स्वस्तेः पुरोनुवाक्या स्वस्ति नः पथ्यासु धन्वसु। याज्या स्वस्तिरिद्धि प्रपथे श्रेष्ठा।

३. आग्नेयस्य पुरोनुवाक्याग्ने नय सुपथा राये अस्मान्। याज्या अग्ने त्वं पारया नव्यो अस्मान्।

४. सोमस्य पुरोनुवाक्या त्वं सोम प्र चिकितो मनीषा। याज्या या ते धामानि हविषा यजन्ति।

५. सवितुः पुरोनुवाक्या तत्सवितुर्वरेण्यं। याज्या य इमा विश्वा जातानि।

६. अदितेः पुरोनुवाक्या सुत्रामाणं पृथिवीं द्यामनेहसम्। याज्या महीमू षु मातरं सुव्रतानाम्।

७. इयं प्रायणीया पञ्चदशसामिधेनीका भवति।

८. अस्या एवापरो धर्म उपांशुहविष्ट्वम्।

९. चोदकप्राप्तयोः प्रतिषेधः शाखान्तरात्।

१०. त्वां चित्रश्रवस्तम स्विष्टकृतः पुरोनुवाक्या। यदाविष्टं तदग्ने याज्या।

११. शंय्वन्ता प्रायणीयेति श्रुतेः। एतावन्तो वैशेषिकाः प्रायणीयाधर्मा नान्य इति चशब्दः। अतश्च ये ऽस्मिन् प्रकरण उक्ताः प्रायणीयाधर्मास्त एवोदयनीयायामतिदिश्यन्ते। नान्ये आशिषामनिर्वचनमित्येवमादयः।

६.

१. प्रायणीयानन्तरं सोमक्रयः। ततः परिवहनम्। तत्र होतुः संप्रेषितस्यानुवचनम्। तदेतस्मिन्नवधौ भवति। राजानमिति सोमस्य पर्यायो ऽन्यस्मिन्प्रदेशे संव्यवहाराय।[1]

२. शकटचक्रयोस्तलतोः प्रतिहन्तुं वर्त्मनी उच्येते। तयोरन्तरेण तिष्ठन् भद्रादभि श्रेय इत्यादिकामनुब्रूयात्।

३. इमां धियं शिक्षमाणस्य देव वनेषु व्यन्तरिक्षं ततान सोम यास्ते मयोभुव इति चतस्रः। एताः शकट्यन्तरेण वर्त्मनी अनुसंयन्ननुब्रूयात्।

४. शालां पूर्वेणाध्वर्यवः शकटमवस्थाप्य प्रपादयन्ति प्रवेशयन्ति शालायां सोमम्। इष्टपेये तु सद्मागारं नयन्ति। तथापि कथं नाम होताग्नियादित्याध्वर्यवस्य शालामपेत्यादेरुपदेशः।

५. येनाध्वर्य्वादयो प्रव्रजेयुर्यथाहवनीयं पूर्वेण वापरेण वा तेनानुसमियाद्धोता।

६. या ते धामानि हविषा यजन्तीति गृहीतसोमाग्नप्रपद्यमानामनुप्रपद्य ततः।

७. येन प्रव्रजेयुस्तेनानुसमियादिति यद्यपरेणाप्याहवनीयं गतस्तथापि प्रत्येत्याग्रेणाहवनीयं दक्षिणामुखः स्थित आगन्देव ऋतुभिर्वर्धतु क्षयमिति परिदध्यात्।

८. उपसृष्टाय उत्सृज्यते वाग्यमादेः।

---

१ II °प्रदेशे C (orig.) °शदे।

९. उपसर्जनीरधिश्रयति मदन्तीरित्यातिथ्यायां। मदन्त्य आध्वर्यवोक्ता[1] मदन्त्याख्या आपः। ताभिरुदकार्यं उदकप्रयोजनमुपस्पर्शनादि कुर्यादत ऊर्ध्वमाग्नीषोमप्रणयनात्।

---

७.

१. सोमपरिवहनादनन्तरमातिथ्यानामेष्टिर्भवति[2]। वैष्णवी विष्णुदेवत्यमस्यां हविः कर्तव्यम्। संज्ञाकरणं शास्त्रसंव्यवहारार्थम्।

२. वार्त्रघ्नावाज्यभागावित्युक्तं भवति।

३. प्रधानयाज्यानुवाक्ये। विष्णोर्नु कं वीर्याणि प्र वोचमिति पुरोऽनुवाक्या। प्र तद्विष्णुः स्तवते वीर्येणेति याज्या।

४. होतारं चित्ररथमध्वरस्य यज्ञस्य यज्ञः सुहिरण्यो अग्न इति संयाज्ये इति श्रुतेः।

५. अग्निमन्थनीयानुवचनमासन्ने हविष्यभिन्दष्ट[3] इत्यभिप्रायः। एवं व्रतप्रदाणाभावात्तुदन्तिर्यजमानस्य मदर्थिता भवति। तथा च कात्यायनः। अन्यन्वाधानव्रतोपायनारण्यभोजनदानब्रह्मवरणानि दीक्षणीयाप्रभृति प्रागुदवसानीयायाः सोमे कृतत्वादित्यत्र आह।

६. इयमिष्टिरेवंधर्मिका भवति।

७. एवमेव श्रुतेः।

---

१ B om. मदन्त्याख्या। २ C (in marg.) •समयात् instead of •वहनात्
३ C (in marg.) ष्ट instead of न्द।

## ८.

१. आतिथ्यानन्तरं सर्वे सयजमानका ऋत्विजो मदन्तीरुपस्पृश्य वक्ष्यमाणं तानूनप्त्रावमर्शनं कुर्युः। सर्ववचने होतैव केवलः स्यात्परिभाषितत्वादिति।

२. अनाधृष्टमित्येवमादिना मन्त्रेण तानूनप्त्र्यमाज्यमृत्विजो यजमानश्च समवमृशन्ति। तदाज्यं च विशेष्यते। सहिरण्यं ध्रुवाया आगतं प्राचीस्थं बर्हिषि स्थापितं सत्। सहिरण्यमिति हिरण्यस्याप्राधान्यात् पक्षे केवलमपि। ध्रौवमाज्यमिति पूर्वकारिवचनात् सर्वेषामाज्यग्रहणमिति ज्ञापनार्थम्। बर्हिष्यासन्नमिति निराधारशङ्कया प्राचीस्थमित्युक्तम्।

३. तानूनप्त्रावमर्शनादनन्तरं मदन्तीरुपस्पृश्याग्रेणाहवनीयं परीत्य अंशूनुपस्पृशन्तस्त्रिपर्वाणः सोमांशवस्तानुपस्पृशन्तो राजानं सोमं स्पर्शनेन मन्त्रेण चाप्याययन्ति। यजमानषष्ठा होतृब्रह्मोद्गात्राग्नीध्राध्वर्यवः। अंशुरंशुष्ट इत्येवमादिना मन्त्रेण। अत्र मन्त्रे सुत्यापदस्य विकृतौ सुत्याद्वित्वे सुत्याबहुत्वे च साधारणे सोमे वचनोहः[1]। सुत्ये उदृचं सुत्या उदृचमिति।

४. सोमाप्यायनं कृत्वा तत्रैव स्थिता उरोऽभिमर्शनं कुर्वन्ति यमादित्या इत्येवमादिना मन्त्रेण।

५.[2] उपस्पृश्येति स्पष्टसिद्धस्य वचनं निह्नवाङ्गार्थम्। सोमाप्याययितार उरोऽभिमर्शनं कृत्वा मदन्तीरुपस्पृश्य प्रत्येत्य निह्नुवते।

---

१ A B (sec. h.) ०मत्रा वोरः। २ A om. the comm. on 5. 6 and the beginning of 9, 1.

यज्ञं परिभूय यद्दक्षिणतः सोमाप्यायनाय गतास्तद्दुरितं[1] नमस्कारेणापनयन्तीत्यर्थः। कथं तदित्यत आह। दक्षिणोत्तानाभ्यापाणीन्। दक्षिणा उत्ताना इतरे तद्विपरीतास्तानेवं विन्यस्य तादृशान्प्रस्तरे कृत्वा निह्नुवते पौर्वाह्णिके निह्नवने[2]। सव्योत्तानानपराह्णे। आपराह्णिके निह्नवने[2]। एष्टा राय इत्येवमादिना मन्त्रेण।

६. आप्यायनमुरोऽभिमर्शनं प्रस्तरे निह्नवनमित्येवमाद्युपसद्युपसदि[3] प्रतीष्टि परिसमाप्त्यनन्तरं कर्तव्यम्। आतिथ्यानन्तरं श्रुतिपाठक्रमेण प्रवर्ग्यो वक्तव्यो यतो ऽतस्तमाह।

---

८.

१. प्रवर्ग्य इति वक्ष्यमाणस्य कर्मणो नामधेयम्। तद्रहितः प्रथमप्रयोगो भवति। तत्र प्रथमयज्ञे प्रवृञ्ज्यादिति (कौ॰ ८.३) श्रुतेः।

२. अधिगतसकलवेदार्थस्यानूचानस्य प्रथमयज्ञे ऽपि विकल्पतः प्रयोगो भवति। कामं तु यो ऽनूचानः श्रोत्रियः स्यात्तस्य प्रवृञ्ज्यादिति श्रुतेः।

३. प्रवर्ग्यप्रचार इति वाक्यशेषः। सूत्रारम्भो होतुस्तत्र पश्चादुपवेशनं कथं नाम स्यादिति।

४. अभिष्टौतीति सूत्रच्छेदः। क्त्वानिर्देशः क्रमार्थः। महावीरपात्राणि प्रवर्ग्योपयोगीनि। तेषु साद्यमानेषु पूर्वेण द्वारेण पत्नीशालां प्रविशेत्। न्यायप्राप्तमप्येतदुच्यते। यदा मध्यन्दिने प्रवर्ग्य-

---

१ C (in marg.) परीतो। २ A B निह्नुवने। ३ B इत्येतदुप॰।

## ८.

१. आतिथ्यानन्तरं सर्वे सयजमानका ऋत्विजो मदन्तीरुपस्पृश्य वक्ष्यमाणं तानूनप्त्रावमर्शनं कुर्युः। सर्ववचने होतैव केवलः स्यात्परिभाषितत्वादिति।

२. अनाधृष्टमित्येवमादिना मन्त्रेण तानूनप्त्राख्यमाज्यमृत्विजो यजमानश्च समवमृशन्ति। तदाज्यं च विशेष्यते। सहिरण्यं ध्रुवाया आगतं प्राचीस्थं बर्हिषि स्थापितं सत्। सहिरण्यमिति हिरण्यस्याप्राधान्यात् पक्षे केवलमपि। ध्रौवमाज्यमिति पूर्वकारिवशात् सर्वेषामाज्यग्रहणमिति ज्ञापनार्थम्। बर्हिष्यासन्नमिति निराधारशङ्कया प्राचीस्थमित्युक्तम्।

३. तानूनप्त्रावमर्शनादनन्तरं मदन्तीरुपस्पृश्याग्रेणाहवनीयं परीत्य अंशुरंशुरुपस्पृशन्तस्त्रिपर्यायः सोमांशवस्त्रानुपस्पृशन्तो राजानं सोमं स्पर्शनेन मन्त्रेण आप्याययन्ते। यजमानषष्ठा होतृब्रह्मोद्गातृप्रतिप्रस्थात्राध्वर्यवः। अंशुरंशुष्ट इत्येवमादिना मन्त्रेण। अत्र मन्त्रे सुत्यापदस्य विकृतौ सुत्याद्वित्वे सुत्याबहुत्वे च साधारणे सोमे वचनोहः[1]। सुत्ये उदृचं सुत्या उदृचमिति।

४. सोमाप्यायनं कृत्वा तत्रैव स्थिता उरोऽभिमर्शनं कुर्वन्ति यमादित्या इत्येवमादिना मन्त्रेण।

५.[2] उपस्पृश्येति शङ्खाभिङ्गस्य वचनं निह्नवाङ्गार्थम्। सोमाप्याययितार उरोऽभिमर्शनं कृत्वा मदन्तीरुपस्पृश्य प्रत्येत्य निह्नुवते।

---

१ A II (sec. h.) °वचनोहः। २ A om. the comm. on 5. 6 and the beginning of 9, 1.

यज्ञं परिभूय यद्दक्षिणतः सोमाप्यायनाय गतास्तद्दुरितं[1] नमस्कारेणापनयन्तीत्यर्थः। कथं तदित्यत आह। दक्षिणोत्तानान्पाणीन्। दक्षिणा उत्ताना इतरे तद्विपरीतास्तानेवं विन्यस्य तादृशान्प्रस्तरे कृत्वा निह्नुवते पौर्वाह्णिके निह्नवने[2]। सव्योत्तानानपराह्णे। आपराह्णिके निह्नवने[2]। एष्टा राय इत्येवमादिना मन्त्रेण।

६. आप्यायनपुरोऽभिमर्शनं प्रस्तरे निह्नवनमित्येवमाद्युपसद्युपसदि[3] प्रतीष्टि परिसमाप्त्यनन्तरं कर्तव्यम्। आतिथ्यानन्तरं श्रुतिपाठक्रमेण प्रवर्ग्यो वक्तव्यो यतो ऽतस्तमाह।

---

## ८.

१. प्रवर्ग्य इति वक्ष्यमाणस्य कर्मणो नामधेयम्। तद्रहितः प्रथमप्रयोगो भवति। तत्र प्रथमयज्ञे प्रवृञ्ज्यादिति (कौ॰ ८. ३) श्रुतेः।

२. अधिगतसकलवेदार्थस्यानूचानस्य प्रथमयज्ञे ऽपि विकल्पतः प्रयोगो भवति। कामं तु यो ऽनूचानः श्रोत्रियः स्यात्तस्य प्रवृञ्ज्यादिति श्रुतेः।

३. प्रवर्ग्यप्रचार इति वाक्यशेषः। सूत्रारम्भो होतुस्तत्र पश्चादुपवेशनं कथं नाम स्यादिति।

४. *अभिष्टौतीति सूत्रच्छेदः। क्वानिर्देशः क्रमार्थः।* महावीरपात्राणि प्रवर्ग्योपयोगीनि। तेषु साद्यमानेषु पूर्वेण द्वारेण पत्नीशालां प्रविशेत्। न्यायप्राप्तमप्येतदुच्यते। यदा मध्यन्दिने प्रवर्ग्य-

---

[1] C (in marg.) परीतो। [2] A B निह्नुवने। [3] B इत्येतदुप॰।

खरणमाग्नीध्रीये भवति तदा तस्मिन् प्रवेशो दक्षिणेन द्वारेण भवायात्।

५. आहवनीयखरपात्राणामुत्तरत इति नोक्तम्। कश्चित्सर्व-थासंभवात्। तद्यथा। आग्नीध्रीये आहवनीयो नापि द्वौ खरौ। यथासंभवं संचर आहवनीयायसमासाल्लभ्यते[१]।

६. प्रवर्ग्यप्रचारप्रदेशस्य पश्चात्संनिधावुपविशेत्।

७. अध्वर्युणा।

८. अर्धर्चं संदधदेकैकां मकारान्तप्रणवावसानयुक्तामभिष्टौति।

९. एकशतपञ्चाशको ऽयमनुवाकस्तस्येयं प्रथमा।

१०. शाखान्तरीयत्वात्सकलपाठः।

११. विकल्पितान्तश्च शाखान्तर आख्यानात्[२]। ब्रह्म जज्ञानं प्रथमं पुरस्तादिति प्रतीकग्रहणात् सावित्रीः प्रथमा अभिष्टौतीति च श्रुतेः (कौ० ८.२)।

१२. अञ्जन्ति यं प्रथयन्तो न विप्रा इत्येतां महावीरमुखे ऽज्यमाने ऽभिष्टुयात्। स यदेतां होताभ्याहाञ्जन्ति यं प्रथयन्तो न विप्रा इति तदेतं प्रवरणीयं महावीरमाज्येन समनक्तीति शतपथ-श्रुतेः (१४.१.२.१३)। अध्वर्युश्रुतिविभागात्[३] पूर्वमभ्यञ्जनादारब्धव्यम्।

१३. सं सीदस्व महाँ[४] असीति खरस्थयोर्मुञ्जप्रज्वलयोरुपरि महावीरे साद्यमाने ऽभिष्टुयात्।

१४. भवा नो अग्ने सुमना उपेतौ तपो ष्वग्ने अन्तरौ[५]

१ A आहवनीयादीनामसमासाते, [illegible] (sec. h) च्च over सास and भ over भ।
२ [illegible] (in marg) व्याख्यानात्। ३ C om. श्रुति। ४ C महे। ५ C अन्तरं।

८.

१. यदुक्तं तस्य चैष्टुभं प्रातःसवनं स्यादिति तदनेन विरुध्यते। काकिन्यायात्। तस्य विश्वो विश्वो वो अतिथिमिति द्वादशर्चसाज्यं द्वादश वै मासाः संवत्सरः संवत्सरस्यैवाप्त्यै तस्मिन्वै द्वे छन्दसी भवतो गायत्र्यश्चानुष्टुभश्चेति श्रुतेः।

२. तस्य विश्वो विश्वो वो अतिथिमित्येतस्य द्वादश ऋचः अर्धर्चावसानाः शस्त्वाग्निं नरो दीधितिभिररण्योरित्येतत्सूक्तमावप-रचितं शंसति। अग्निं नरो दीधितिभिररण्योरित्येतत्पञ्चविंशत्यृच-मुपसंशंसति। तस्मिन्वै द्वे छन्दसी भवतो विराजश्च त्रिष्टुभश्चेति श्रुतेः।

३. मदग्निं नर इत्येतदादिष्टशस्त्रम्। आदिष्टं कथितं शस्त्रं शंसनधर्मो यस्य। अर्धर्चशो वा प्रातःसवनमित्येतस्मा भूदित्येवमर्थं सूत्रम्। विराजो ऽर्धर्चशः शस्यास्त्रिष्टुभः पच्छ इति।

४. तस्य चैष्टुभं प्रातःसवनं स्यादित्येतस्मात्सूत्रान्मण्डूकश्रुतिन्या-येन तस्येत्येतत्पदमनुवर्तते। तस्य महाव्रतस्य चैष्टुभः प्रउगो भवतीति।

५. [1]त्रैष्टुभं प्रउगस्येत्यर्थः।

६. कुविदङ्गेत्येतस्मादुत्तरं यावत्तर इति।

७. विषुवति मध्यमाच्छन्दोमात्त्रीणि तृचानि प्रथमे चोत्तमं च (११. १२. १३) प्रथमात्त्रीणीति। अतस्त्रोदां चतुर्वरूप सुप्र-तीकमित्येतद्भवति।

---

१ A चैष्टुभस्य प्रउग इत्यर्थः　O चैष्टुभः प्रउगस्येत्यर्थः। cf १०. ८. ६ Comm.

९. उपालम्भ्ययोरैन्द्र उच्चैर्भवतीति ।

१०. उपालम्भ्ययोः प्राजापत्य उपांशु भवतीति ।

११. वपामार्जनान्तं पशुकर्म कृत्वा प्राक्सर्पणात्तदेतत्प्रेङ्खमिश्रं प्रेङ्खबन्धनार्थं यत्किंचिद्रज्ज्वादि तत्सहितं बहिर्वेदि वेदेर्बहिःप्रदेशे[1] नदीतडागादौ प्रक्षाल्य अथवा चात्वालात्पुरस्तादभ्युद्धृतैर्जलैः[2] प्रक्षाल्यान्तरेण चात्वालोत्करौ तीर्थेन प्रपद्योत्तरेणाग्नीध्रीयं धिष्ण्यं पर्यावृत्य पूर्वया द्वारा सदः प्रवृत्य [3]होतुर्धिष्ण्यस्योत्तरतःपुरस्तात्प्रागग्रं प्रेङ्खफलकं विशाख्यौ वंशं रज्जुं चोपस्थापयन्ति होत्रादयः ।

१२. प्रशास्त्रादीनां यस्ययस्य हृष्यादि वेदेर्बहिर्भवति[4] तद्-यथेवमेव प्रक्षाल्य यथा संचरः संप्रसर्पणे भवति उत्तरेणाग्नीध्रीयं धिष्ण्यं गच्छन्ति ये प्रत्यञ्चो धिष्ण्यानतिक्रामन्तीत्यनया व्यवस्थया (६. १२. १२) यावत्तद्गृहपती एकाहे सदस्यस्य दक्षिणेनाग्नीध्रीयं धिष्ण्यं गत्वा प्रशास्त्राद्यो ऽच्छावाकपर्यन्ता धिष्ण्यवन्तो यथोक्तेन संचरेणाग्नीध्रं प्रविश्योत्तरेणाग्नीध्रीयं धिष्ण्यं कृत्वा पूर्वया द्वारा सदः प्रविश्य धिष्ण्यानग्रेण कृत्वाच्छावाकधिष्ण्यमुत्तरेण कृत्वा [स्वस्य स्वस्य धिष्ण्यस्य पश्चादानीय उत्तरतो धिष्ण्यं][5] तत्रतत्र स्थापयन्ति । अच्छावाकस्त्वपरया द्वारा सदः प्रवृत्य उत्तरेण धिष्ण्यं स्थापयति ।

१३. [6]स्वमतस्थापनार्थं परमतं दर्शयति । तत्र महाव्रतस्य पैङ्ग्यय्यकम्भङ्कारयोर्मतेन त्रैष्टुभं प्रातःसवनं स्यादिति ।

---

१ C °देशेन। २ A °भ्युद्धृ°। ३ C om. उत्तरतः। ४ A पृष्ठादेर्वे°।
५ C om.। ६ A om.

८.

१. यदुक्तं तस्य त्रैष्टुभं प्रातःसवनं स्यादिति तदनेन विरुध्यते। छत्त्रिन्यायात्। तस्य विश्रो विश्रो वो अतिथिमिति द्वादशर्चमाज्यं द्वादश वै मासाः संवत्सरः संवत्सरस्यैवाप्त्यै तस्मिन्वै द्वे छन्दसी भवतो गायत्र्यश्चानुष्टुभश्चेति श्रुतेः।

२. तस्य विश्रो विश्रो वो अतिथिमित्येतस्य द्वादश ऋचः अर्धर्चावसानाः प्रस्ताग्निं नरो दीधितिभिररण्योरित्येतत्सूक्तमावावरचितं शंसति। अग्निं नरो दीधितिभिररण्योरित्येतत्पञ्चर्चं प्रत्यृचमुपसंशंसति। तस्मिन्वै द्वे छन्दसी भवतो विराजश्च त्रिष्टुभश्चेति श्रुतेः।

३. तदग्निं नर इत्येतदादिष्टप्रस्तम्। आदिष्टं कथितं प्रस्तं शंसनधर्मो यस्य। अर्धर्चशो वा प्रातःसवनमित्येतस्मात् भदित्येवमर्थं सूत्रम्। विराजो ऽर्धर्चशः प्रस्तास्त्रिष्टुभः पच्छ इति।

४. तस्य त्रैष्टुभं प्रातःसवनं स्यादित्येतस्मात्सूत्रान्मण्डूकप्लुतिन्यायेन तस्येत्येतत्पदमनुवर्तते। तस्य महाव्रतस्य त्रैष्टुभः प्रउगो भवतीति।

५. [1]त्रैष्टुभं प्रउगमस्येत्यर्थः।

६. सुविदक्षेत्येतस्मादुत्तरं यावत्तर इति।

७. विषुवति मध्यमाच्छन्दोमात्तीर्णि तृचानि प्रथमे चोत्तमं च (११. १३. १२) प्रथमात्तीर्णीति। अतश्चोदां चतुर्वृत्त्य सुप्रतीकमित्येतद्भवति।

---

[1] A त्रैष्टुभस्य प्रउग इत्यर्थः  B त्रैष्टुभः प्रउगस्येत्यर्थः। cf १० ८, ६ Comm.

८. एष वा उ कदांस्त्रैष्टुभस्तृचक्लृप्तो वामदेव्यः प्रउग इति श्रुतेः।

९. त्रैष्टुभं[1] प्रउगस्येति संबध्यते।

१०. पूर्ववद्व्याख्या।

११. पूर्वाणि चौष्णि[2] तृचाणि वासिष्ठानि। इदमपि वासिष्ठम्। तथापि वामदेव्यः प्रउग इत्युच्यते छत्रिन्यायेन।

१२. स त्रैष्टुभः प्रउगस्तृचक्लृप्तः। क्लृप्तानि तृचानि यस्य। यद्यपि निष्ठान्तस्य पूर्वनिपातः प्राप्नोति तथापि[3] वाहिताग्न्यादिषु पूर्वनिपातबाधः (२. २. ३७)।

१३. पञ्चस्त्रिष्टुप्जगतीनामिति त्रिष्टुभां[4] पञ्चःशंसने ऽपि प्राप्ते वचनमर्धर्चशो वा प्रातःसवनमित्येतस्य बाधनार्थम्।

१४. वाशब्दो ऽवधारणार्थः। ऐकाहिकमेव प्रातःसवनं स्यादित्यर्थः। तदाहुर्न त्रैष्टुभं प्रातःसवनं स्यान्नोहयति क्लृप्तच्छन्दसो यज्ञमुखमैकाहिकमेव स्यादिति श्रुतेः।

१५. स्वमतपरमतभेदेन प्रातःसवनस्य क्लृप्तिर्जातेत्यर्थः।

---

९.

१. अथ प्रातःसवननिरूपणानन्तरं माध्यन्दिनं सवनं क्रमप्राप्तं निरूप्यत इत्यर्थः।

२. आ ला रथं यथोतय इत्येवमाद्यास्तिस्रः प्रस्थारम्भणीया प्रतिपद्भवन्ति।

---

१ B त्रैष्टुभः। २ C om. चौष्णि। ३ C तथा वाहिता०। ४ C त्रैष्टुभां।

३. इदं वधो इतमस्य इत्येवमादिरनुचराख्यसूक्तो भवति।

४. एष प्रतिपदनुचरलक्षणो विधिर्नित्यः प्राकृत एव एकाहात्प्रकृतिभूतादग्निष्टोमान्नायते। अत्रापि भवतीत्यर्थः। इन्द्रनिहवादिवत् प्रकृतिविकृतिभावेन प्राप्तो ऽप्येष विधिर्विस्पष्टार्थं क्वचिदुच्यते।

५. सूक्तविहृतावन्य इति (७. १८. २०) प्राप्तस्य पुनर्वचनं विस्पष्टार्थम्।

६. पङ्क्तित्रिष्टुब्जगतीनामिति प्राप्ते वचनं[1] प्राकृतधर्मस्मरणार्थम्।

७. निष्केवल्यस्य महत्त्वया महत्तीयस्य कस्यचिदतिरिक्तमङ्गा[2] स्याच्छन्दोमवत् तन्निवृत्त्यर्थं वचनम्। इति एतावदेव महत्तीयं नैतदधिकमिति।

---

१०.

१. एतत्सूक्तमारभ्येति प्रागेति (१७. १०. १०) यावत्तदन्तर्गतस्य सकलस्य पदार्थकलापस्य निष्केवल्याङ्गताज्ञापनार्थमिदं सूत्रम्। अथानन्तरं क्रमप्राप्तं निष्केवल्यसंबन्धि कर्मोच्यत इत्यर्थः।

२. कौषीतकिसंमतो ऽयं पक्षः स्थितिलिङ्गात्।

३. महत्तीयसंमानन्तरं होता प्रेङ्खनवटौ खानयेदिति पैङ्ग्यस्य मतम्।

---

१ C पुनर्वचनं विस्पष्टार्थं। प्राकृतधर्मस्मरणार्थं च। २ C om. ति।

४. दानवाचनान्वारम्भणवरवरणव्रतप्रमाणेषु यजमानं प्रतीयादिति यजमानस्यैव प्रमाणं प्राप्नोति। अत्र तु समानकर्तृताविरोधाद्धोतुरेव प्रमाणता। स्वं धिष्ण्यं जघनेन स्वस्य धिष्ण्यस्य पश्चाद्भागे चतुरङ्गुलाधिकं पदं होता प्रमिमीते।

५. तस्य ¹चतुरङ्गुलपदस्य पश्चात्प्रदेशे उदीचीनाग्रं फलकं निदधाति।

६. तस्य फलकस्य उभयतो दक्षिणप्रदेशे फलकादहिः² उत्तरप्रदेशे च स्वकीययोर्हस्तयोश्चतुरङ्गुले उपदधाति। सर्वत्र तु क्रामत्यधान्तलात् खानयेदिति बोध्यम्।

७. ³हस्तद्वयनिहितचतुरङ्गुलाभ्यां⁴ बहिःप्रदेशे स्वपरिजनेर्दचिणपूर्वं लेखाद्वयं कारयित्वा प्रेङ्खावटौ दक्षिणपूर्वौ खानयति होता।

८. उत्किरौ धूलितौ मार्ष्टौ वोद्धर्षौ वा उत्किरन्ति निक्षिपन्ति खनितारः।

९. तयोरवटयोस्ते विशाखौ ये पूर्वं तस्यैव अन्यस्य वा उदुम्बरस्य छिन्ने ते दक्षिणपूर्वे आरोप्य उत्तराग्रं वंशं रज्जुबन्धनशाखौ तयोर्विशाखयोरुपरि अभ्यादधाति होता।

१०. यजमाननिवृत्त्यर्थं होतृग्रहणं। भूमिस्थो होता शीर्षसंमितं वंशं करोतीत्यर्थः।

११. अल्पीयसि होतर्यूर्ध्ववाहुसंमितं वंशं कार्यम्।

१२. ते विशाखौ दृढपर्यूष्टे दृढनिखाते पर्यूषति, परितो

---

१ C चतु॰। २ C om फलकादहिः। ३ A ॰द्वयनिहितच॰। ४ C ॰ङ्गुल्या।

दृढयति[1] यथा न व्यथेयाताम्। न कम्पेयाताम्। सुदृढे करोतीत्यर्थः।

१३. तच्चतुर्धान्तेषु वितर्दयतीत्युक्तम् (१७. १. १४)। तेषु सच्छिद्रेषु अन्तेषु अधस्तात्फलकं रज्जुद्वये ग्रन्थिद्वयं[2] बद्धा रज्जोश्चतुर्भिरग्रैश्चतुर्षु च्छिद्रेषु परिव्ययति यथा न संभ्रश्येत। रज्जुच्छिद्रेषु भ्रंशनभिया ग्रन्थिचतुष्टयं कर्तव्यमित्यर्थादवसीयते।

१४. दक्षिणरज्ज्वन्तद्वयं गृहीत्वा दक्षिणां प्रेङ्खस्थूणामुत्तरेण वंशस्योपर्यन्योन्यनिर्गमनेन रज्ज्वन्तौ गृहीत्वा बध्नन्ति होतुः परिजनाः।

१५. उत्तररज्ज्वन्तद्वयं गृहीत्वा उत्तरां प्रेङ्खस्थूणां दक्षिणेन वंशस्योपरि अन्योन्यनिर्गमनेन रज्ज्वन्तौ गृहीत्वा बध्नन्ति होतुः परिजनाः।

१६. तत्प्रेङ्खफलकं सुदृढं बद्धा तथा प्राञ्चति अधः प्रक्षिपति यथा प्रक्षिप्तमुपरि भूमेः प्रादेशमात्रेण स्यादुद्भवतीति।

१७. तस्य फलकस्याधस्तात्प्रदेशे प्रागग्रैरुदगग्रैश्च दर्भैरुपोहति।

१८. तत्फलकमभिनिबद्धं[3] यथा भवति तथा पर्यूषति दृढीकरोति। यथा न व्यथेत न प्रकम्पेत।

१९. तत्फलकं संबाध्य सुदृढं बद्धोत्तरस्यां प्रेङ्खस्थूणायामपाश्रयति[4] उत्तरस्यां विमाख्यां प्रतिमुञ्चतीत्यर्थः।

२०. तत्फलकं महत्तीयमंथनानन्तरं यथास्थानं स्थापयेद्धोता।

---

१ A दृढयति। २ C ins द्वयं। ३ A अभिनिविद्धं। ४ A उपाश्रयति।

## ११.

१. माहेन्द्रग्रहणानन्तरमध्वर्युः सदस्येति आगच्छति।

२. होतृधिष्ण्यस्यायतो ऽध्वर्युः प्राङ्मुख उपविशति।

३. तं होतृधिष्ण्यस्याग्रत उपविष्टमध्वर्युं होता आह अध्वर्यं उप नु रमाह इति।

४. स होता उत्तरां प्रेङ्खस्थूणामध्वर्युं च उत्तरेण गत्वा प्राग्द्वारेण निष्क्रम्य पूर्वद्वारेणाग्नीध्रसदं प्रपद्य आग्नीध्रीयं धिष्ण्यमुत्तरेण पर्येति आवर्तनेन सर्वतो गत्वा पश्चात्प्राङ्मुख उपविश्य दक्षिणजान्वक्तः सन् स्रुवेणाज्यस्थाल्याः सकाशादाज्यं गृहीत्वा वक्ष्यमाणैर्मन्त्रैरष्टावाहुतीर्जुहोति।

## १२.

१. अष्टानामाहुतीनामियं प्रथमा।

२. मन्त्राणामल्पाक्षरत्वात्त्रिसृणामाहुतीनामथोत्तरचापि[1] सहोपादानम्।

३. गवे स्वाहेत्येवमादिभिस्त्रिभिर्मन्त्रैः स्वाहाकारान्तैरपरास्तिस्र आहुतयो होतव्याः।

४. यदिदमित्यादिना मन्त्रेणाष्टमीं हुत्वा वक्ष्यमाणं करोति।

५. स्रुवं स्थाल्यां मुक्त्वा वक्ष्यमाणं करोति।

---

१ A ०हुतीनामन्त्योत्तर०।

६. उत्तरेणाग्नीध्रीयं[1] धिष्ण्यं पर्येत्याग्नीध्रद्वारात्पूर्वया द्वारा निःसृत्य सदसो ऽग्रे गत्वा[2] अन्तःपात्यादुत्तरवेदिपर्यन्तरेखा स्रुतिसंज्ञका। तामुत्तरेण प्राङ्मुखस्तिष्ठन्परिमादसंज्ञकान् जपाञ्जपति।

७. अथैतान्परिमादाञ्जपाञ्जपति। कीदृश्येषा परिमादसंज्ञेति चिन्त्यते। रूढा वा [3]यौगिकी वेति। अत्र योगो न दृश्यते। अथ कथंचित् दृश्येत तथापि रूढिर्योगादबलीयसीति रूढिरेवाश्रयणीया।

८. अथ परिमादाञ्जपादनन्तरमवैव[4] सदसः पुरस्तात् स्रुतिमुत्तरेणैव तिष्ठन्पूर्वार्धपक्षं पुच्छाद्यङ्गयुक्तमग्निचयनमुपतिष्ठते होता।

## १३.

१. नमस्त इत्यादिना मन्त्रेण चयनस्य पूर्वभागमुपतिष्ठते।

२. नमस्ते रथन्तरायेत्येवमादिना मन्त्रेणाग्निचयनस्य दक्षिणं पक्षमुपतिष्ठते।

३. नमस्ते बृहत इत्येवमादिना मन्त्रेणाग्निचयनस्योत्तरं पक्षमुपतिष्ठते।

४. नमस्ते वामदेव्यायेत्येवमादिना मन्त्रेणाग्निचयनस्य मध्यमुपतिष्ठते।

१ C दक्षिणेन *instead of* उत्तरेण। २ A ॰पर्यन्तं। ३ C ॰किकेवेति। ४ C ॰मादाञ्जपानन्त॰।

५. नमस्ते यज्ञायज्ञीयायेत्येवमादिना मन्त्रेणाग्निचयनस्य पुच्छमुपतिष्ठते।

६. यद्यपि यजुःशाखिनां महाव्रते चयनस्य नियमो ऽस्ति तथाप्यस्मच्छाखायामेतस्मादेव सूत्रारम्भसामर्थ्यान्महाव्रते चयनस्य विकल्प इत्यनुमीयते। यद्युत्तरवेदावग्निराहितो[1] भवति तथा सति यमिष्टस्य दीप्तस्याग्नेरेव पूर्वार्धादिभागान् कल्पयित्वा क्रमेणोपतिष्ठत इत्यर्थः।

७. आदित्यदर्शनाय कुतश्चिद्गत्वोपस्थास्यत इति मत्वाचैव तिष्ठन्नित्युच्यते। अथेत्यानन्तर्ये।

८. केचिदेवं वदन्ति। सदसः पुरस्तात्स्तुतिमुत्तरेण स्थित आदित्यमपश्यन् शालाया आकाशं कृत्वा तदन्तरालेनादित्यं दृष्ट्वोपतिष्ठते।

९. [2]शालाभेदनस्यायुक्तत्वात् यस्मिन्देश आदित्यो ऽस्ति तद्दिशस्थमेवादित्यं ध्यात्वोपतिष्ठत इति सिद्धान्तः।

१०. आदित्यमुपतिष्ठत इत्युक्तम्। तथायं मन्त्रः करणत्वेन[3] विनियुज्यते।

११. अथ अनन्तरं दक्षिणेन शाङ्कनाहत्य सदः प्रविशेत् पूर्वोक्तेन संचरेण प्रेङ्खफलकस्य पश्चाद्गच्छेत्।

१२. प्रेङ्खस्य पश्चात्प्राङ्मुख उपविश्य तत्प्रेङ्खमन्वारभ्याविमुच्यन्मायत आसीनाय समधिस्पृश्येति (१७. १६. ५) यावत्।

---

१ C ०ग्निरचितो। पूर्वार्धादिभा०। २ C शालाभेदे न युक्तत्वाद्। ३ A मन्त्रकरण०।

१४.

१. स होता पुरस्तात्प्रथमं छन्दोगैः शीर्षण्यान् शिरोरूपान् तृचान्निगादयेत्। गापयति।

२. स होता पुरस्तात्प्रथममेवाध्वर्युणा सह संवादं कुर्यात्। कथमित्याकाङ्क्षिते आह।

३. इतिकरणः संवादानन्तर्गत एव संवादस्यार्थ उच्यते। ब्रह्म जज्ञानं प्रथमं पुरस्तादियं पित्रे राष्ट्र्यत्येग्रे विश्वे देवा मम शृण्वन्तु यज्ञिया इत्येतास्तिस्र ऋचः स तूष्णींशंस इत्येतस्य द्वादशसंख्याकपादसमुदायस्य तूष्णींशंससंज्ञा। हे अध्वर्यो तस्मिंस्तूष्णींशंसे प्रतिपादं[1] द्वादश प्रतिगरास्त्वया देया इत्यर्थः। आत्मनो विहृतत्वात्पदानुषङ्गानां वैपरीत्येन शंसनात्प्रतिगरस्यापि[2] वैपरीत्यमाशङ्क्य निराचष्टे[3]। होतैवमाह। हे अध्वर्यो अहं आत्मानं विहृतं पदानुषङ्गांश्च विहृतान् शंसिष्यामि तत्र त्वया अविहृत एव प्रतिगरो दातव्यः।

४. अत्रापि इतिकरणः संवादान्तताज्ञापनार्थः। अथ अनन्तरं होता प्रस्तोतारमाह। हे प्रस्तोतः तव यदा अत्र स्तोत्रियाः परिशिष्यन्ते तदा नः अस्मान् प्रतिब्रूतात्[4]। अवसरो वक्तव्यः। तस्मिन्नवसरे मम इदं वक्ष्यमाणं सं महानित्यादि जप्तव्यमस्ति।

५. परशाखीयमपि क्रमज्ञापनार्थमुच्यते। अथानन्तरमध्वर्युः पार्ष्ठिकं स्तोत्रमुपाकरोति।

---

१ A ins. इति। २ A वैपरीतम्। ३ A निराक्रियते। ४ O ॰शिषंति A ॰ब्रूयात्।

६. अथेतरे दीक्षिताः प्रतिपुरुषं कूर्चीः कुर्वत इत्युक्तम्। यत्र काले उद्गातासन्द्यारोहणं करोति तदानन्तरमेव प्रस्तोतप्रतिहर्तारावेव[1] कूर्चावारोहयतः।

७. एतत्सूत्रकरणसामर्थ्यादेव दीक्षितानां कूर्चीकरणकाले उपगात्रादयो ऽपि प्रतिपुरुषं कूर्चीः कृत्वास्मिन्काले ऽध्यारोहेयुरिति ज्ञायते।

८. कदाचिदपि पत्न्यः प्रथमं न प्रवादयेयुरित्येतदर्थमिदं सूत्रम्। प्रथमं वीणावादनमुद्गातैव कुर्यात्।

९. तमुद्गातारमनु पश्चात्पत्न्यो ऽपि वीणावादनं कुर्युः।

१०. पूर्वद्वारादिषु स्थापितान् दुन्दुभीन् वादनैर्वादयन्ति यजमानपुरुषाः।

११. तं तस्यैव लाङ्गूलेन काले (१७. ५. १०) भूमिदुन्दुभिमाघ्नन्तीत्युक्तम्। अतो ऽस्मिन्नवसरे तं दुन्दुभिवृषभस्य लाङ्गूलेनाघ्नन्ति।

१२. स्तोत्रोपाकरणकाले बहवो घोषाः कर्तव्या इति सूत्रान्तरम्। तस्मादस्मिन्नवसरे महावादिनो [2]घोषान् कुर्वन्तीति।

१३. अथ या मार्जालीयं पर्यभ्यो भवन्ति ताभ्यः प्रत्येकं भवान् कलशानुपकल्पयन्तीत्युक्तम्। अथानन्तरमुदकपूर्णान् घटान् बिभ्रत्यो दास्यो मार्जालीयं परियन्ति परिभ्रमणं कुर्वन्तीत्यर्थः।

१४. मार्जालीयं परिगच्छन्त्यो दास्यो हैमहा२ इदं मध्विदं मधु इत्येतां वाचं वदन्ति।

१५. अप्रादक्षिण्येन त्रिवारं भ्रमणं कुर्वन्तीति।

---

[1] C °र्तारावपि तावेव। [2] A बहुघो°।

१६. तत ऊर्ध्वमप्रदक्षिणगमनानन्तरं प्रदक्षिणं त्रिस्त्रयौं परियन्तीति।

## १५.

१. अथैनमश्वरथमुपकल्पयन्तीत्युक्तम्। अथ एतमुपक्लृप्तं रथमस्मिन्नवसरे युञ्जन्त्यध्वर्यवः क्व प्रदेशे युञ्जन्तीत्यपेक्षिते उच्यते।

२. दक्षिणवेद्यंसस्य पुरस्ताद्भागे युञ्जन्ति।

३. यथासंपन्नः क्षत्रियः संनद्धस्तीपु धनुरादाय तं रथमातिष्ठति,

४. स राजा वा राजमात्रो वा अभितो वेदिं प्रदक्षिणं वर्तमानो भ्रमन्नुत्तरेणाग्नीध्रं प्राच्यौ प्रक्षे स्थूणे (१७. ५. ५) विनिम्नन्त्याब्रह्मणाधित्युक्तलक्षणमेनमाब्रह्मणं त्रिः कृत्वा विध्यतीति।

५. तमाब्रह्मणं यत्नमहितेन शरेण नातिविध्येत। आब्रह्मणसंवासमेव[1] शरं करोतीत्यर्थः।

६. त्रिः प्रदक्षिणं विध्यतीति वेधस्य त्रित्वे सिद्धे ऽपि द्वितीयतृतीयशराभ्यां सपत्नवेधो मा भूदिति सूत्रात् आब्रह्मणे त्रयो ऽपि शराः संसृज्य एव कर्तव्याः।

७. तं रथं प्राञ्चमुदञ्चमुत्तरपूर्वस्यां दिशि अश्वान्ति शिथिलयन्त्यध्वर्यवः।

८. तं रथं तत्रैव उत्तरपूर्वस्यामेव विमुञ्चन्ति योक्तारः।

---

[1] MSS. आसव॰।

९. अथ यस्मिन्नवसरे प्रस्तोता छोन्दोगानां सम्पर्कं परिग्रिह्य वेलेत्याह तदा होता किं कर्तव्यमित्युच्यते।

१०. अथ प्रस्तोत्रा वेलेत्युक्ते होता दक्षिणेन प्रादेशेन भूमिसंग्राङ्गुष्ठेन प्रेङ्खफलकं भूमिं च सद्वैव संस्पृशन् संमहान् महत्या दधादिति मन्त्रं जपति।

११. अथ प्रेङ्खफलकस्योपरि प्रागग्रं प्रादेशं निधाय सं देवो देव्या दधादिति मन्त्रं जपति।

१२. अथ प्रेङ्खफलकादुपरि प्रादेशमात्रे आकाशे प्रागग्रं प्रादेशं धारयन् सं ब्रह्म ब्राह्मण्या दधादिति मन्त्रं जपति।

१३. अथ प्रेङ्खफलकमधनः समीपे कृत्वा नखिन्प्रेङ्खफलके स्थतः स्थिते चिरभ्यन्य चि.हतः श्वासं मुक्त्वा चिरश्ववानिति चि.हतः श्वासं प्रतिगृह्णातीत्यर्थः।

---

१६.

१. अथ अनन्तरमेतत्प्रेङ्खफलकमुरसा हृदयेन संस्पृश्य मंसर्गं कृत्वा प्रेङ्खफलकस्य दक्षिणं भागमात्मनो ऽतिहरन् हृदयात्पृथक् कुर्वन्नर्को ऽसीत्यादिकं मन्त्रं जपति। इतिकरणस्य मन्त्रान्त इति मन्त्रान्तज्ञापनार्थ इतिकरणः।

२. अथ दक्षिणं भागमात्मसंसर्गं कृत्वा उत्तरभागमात्मनो ऽतिहरन् रुद्रास्त्वेत्यादिकं मन्त्रं जपति।

३. अथोत्तरं भागमुरःसंसर्गं कृत्वा दक्षिणं भागं हृदयस्थानप्रदेशात्पृथक् कुर्वन्नादित्यास्त्वेत्यादिकं सावाप्यायेत्येवमन्तं मन्त्रं जपति।

४. अथ दक्षिणं भागमात्मसंस्पृष्टं[1] कृत्वा उत्तरं भागमात्मनो वियोजयन् विश्वे त्वा देवा इत्यादिकं कामप्रायेत्येवमन्तं मन्त्रं जपति।

५. अथ प्रेङ्खफलकरज्जू अन्तरेण समधिसृप्य आसन्नौ भागयोः पादौ कृत्वा भूमौ सुस्थितौ करोति।

६. कृतव्याख्यानम्।

७. अथ भूमौ स्थापितौ पादौ प्रेङ्खफलकस्योपरि दक्षिणपूर्वौ नीत्वा[2] उपेत्याथास्मिं पुत्रादयस्तिष्ठन्तीत्युक्तलक्षणदक्षिणभागोऽन्तस्थं कृत्वा दक्षिणपार्श्वप्रदेशेन[3] प्रागग्रेण दक्षिणेन प्रादेशेन[4] प्रेङ्खफलकस्य पश्चाद्भागमुपस्पृशति। प्रजापतिष्ट्वेत्येवमादिना मन्त्रेण। इतिकरणो मन्त्रान्तज्ञापनार्थः।

८. कृतव्याख्यानम्।

---

## १७.

१. अथ प्राङ्मुखमुभयहस्तसंनिवेशं कृत्वा[5] सं वागित्यादिकं स्वर्गमिय्यन्नित्येवमन्तं मन्त्रं जपति।

२. कृतव्याख्यानम्।

३. स होता विसृष्टो वाचो मत्सरो ऽन्यत्प्रभवेषो यथा[6]

---

१ C संस्पृ॰। २ C नीत्वा उपेत्य यस्मिन्। ३ C om. न। ४ C om. प्रादेशेन। ५ A ins. सं कृत्वा। ६ C (in marg.) ins. म।

भवति तथा विनिनीयमाण उपवचणं[1] स्तुतिपर आस्ते [2]यावत्स्तोत्रं प्रवदन्ति।

४. प्रस्तोतृप्रतिहर्तृउद्गातृव्यध्वर्युव्यतिरिक्ताः[3] सर्वे गृहपतिसहिता दीक्षिता ऋत्विजो वा यत्र अथ समधिरुह्येत्येतस्मिन्नवसरे होता प्रेङ्खमवरोहणं करोति तदा दक्षिणैर्धिष्ण्यैः धिष्ण्यवन्तो धिष्ण्य-संनिधौ अपरेण होतुः पश्चादिति प्रकृतिसिद्धम्।

५. यदा उद्गातृणामुत्तमा स्तोत्रिया परिशिष्यते तदा स्तोत्रे स्तूयमाने वाद्यमानान् दुन्दुभीनवहणन्ति। उपरमयति होता।

६. स्तोत्रे स्तूयमाने वाद्यमानं भूमिदुन्दुभिमुपरमयति।

७. उद्गातुरासन्द्यारोहणकाले कुर्वन्ति घोषं घोषकृत इत्यु-क्तम्। अस्मिन्नवसरे उत्तमस्तोत्रियापरिशेषे[4] ते ऽप्युपरमन्तीति।

८. अथ अस्मिन्नवसरे दास्यो मार्जालीयं परिभ्रमन्ति पूर्व-वदिति नोक्तत्वाच्छब्देनेति गम्यते।

९. ता दास्यस्तानुदकपूर्णान् घटान् मार्जालीये निनीय उप-निधाय तत्रैवमुक्त्वा यथागतं गच्छन्तीति।

१०. वाग्यमनावध्यर्थं सूत्रम्।

११. प्रस्तोत्रा एषेति प्रोक्ते होता वाग्यमनं करोति तावद् यावदनुवषट्कारं करोति।

१२. प्रतिहारसंनिधावाह्वावं वृद्धिस्थं करोतीत्यर्थः।

१३. उत्तमात्प्रतीहारादूर्ध्वमाहूय (७. १० २.) शंसतीत्यु-क्तत्वात्तदनन्तर एव आह्वावो युक्तः।

---

१ A om. स। २ C ins. यावद्। ३ C om. व्यध्वर्यु। ४ C स्तोत्रियाय।

१४. यथास्य होतुर्वाक् वाणी सर्वा अन्या वाचोऽतिक्रम्य[1] वदति तथातितरामुच्चैराहूय निरुपांशु हिंकृत्य तूष्णींशंसं शंसतीति संबन्धः।

१५. पूर्वसूत्रे आहावधर्मोपदेशः। अत्र तमेवाहावमनूद्य तूष्णींशंससंबन्धं विधाय तस्य तूष्णींशंसस्यातः परं विधिरुच्यत इति शेषः।

द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारस्तदाचरणं चायुष्यमिति द्विरभ्यस्तम्।

## इति महाव्रतभाष्ये प्रथमो ऽध्यायः समाप्तः।



१ C क्रमते।

# अथाष्टादशोऽध्यायः ।



१. यथास्य वाक् सर्वा अन्या वाचोऽतिवदेदित्यनेन प्रकारेण उच्चैस्तरामाहावं कृत्वाहावान्तेन प्रणवेन प्रथमस्य हिंकारस्य प्राणसंधानं कृत्वा मकारेणावसानं कार्यम् । ततो द्वितीयो हिंकारो मकारान्तः कर्तव्यः । ततस्तृतीयं हिंकारं मकारान्तमेव कृत्वा प्राणसंततं तूष्णींशंसस्य संधानं कार्यम् । श्रुतिरपि प्रथमस्य हिंकारस्याहावेन सह प्राणसंधानं दर्शयति । हिंकारेण प्रतिपद्यत एतदुक्थम् प्राणो वै हिंकारः प्राणेनैवैतदुक्थं प्रतिपद्यत इति । प्रतिपदः प्राणरूपेण संस्तवात्प्राणसंततमाहावस्य हिंकारेण प्रथमेन गम्यते । ननु आहावस्योच्चैस्त्वाद्धिंकारस्योपांशुत्वात्तत्संधानं न युज्यत इति चेत् । सत्यम् । न दोषः । आश्वलायने उपांशुयाजे प्रणवयेयजामहवषट्काराणामुच्चैष्ट्वे याज्यापुरोनुवाक्ययोरुपांशुत्वे प्राणसंधानस्य दर्शनात् प्राणसंततः प्रणवः पुरोनुवाक्यायास्तथागूर्वषट्काराविति । आगूरिति तेषां येयजामहस्य संज्ञा । एवमत्रापि उच्चैराहावं कृत्वा उपांशुधर्मकेण मकारान्तेन हिंकारेणावसानं ततोऽसंहितमेव द्वितीयं हिंकारं मकारान्तं कृत्वा ततस्तृतीयेन मकारान्तेन हिंकारेण संततेन तूष्णींशंसपादस्य[1] संधानं कार्यम् ।

---

१ A तूष्णींशंसं ।

२. ब्रह्म जज्ञानमित्याद्यानां तिसृणामृचां तूष्णींशंससंज्ञा । तास्वोपांशुधर्मकाः समस्वरो द्वितीयस्य चतुर्थस्येति (७. १६. ५) प्राप्ते[1] प्रणवमकुर्वन्[2] पच्छः शंसेत् । अथैतं तूष्णींशंसमुपांशु शंसति । वाग्वा एतदह्नः[3] मनस्तूष्णींशंसो मनसैव तद्वाचं समर्धयतीति श्रुतेः ।

३. मध्यमया माध्यन्दिनसुत्येस्तारं मरुत्वतीयान्निष्केवल्यमिति (८. १४. ३. ४) सकलस्य निष्केवल्यशस्त्रस्य मरुत्वतीयशस्त्रादुच्चैस्तरां मध्यमस्वरे प्राप्ते ऽपि शस्त्रारम्भे आहावस्योर्वैद्यातूष्णींशंसस्योपांशुत्वादात्मने वाचमनुसृजनीयात्मशब्देन सकलं परिधानीयान्तं शस्त्रमुपलक्ष्य प्रकृतिप्राप्तो मध्यमस्वरो ऽनूद्यते ।

४. तस्य पञ्चविंशः स्तोमो राजनं पृष्ठमित्युक्तम् (१७. ७. ३. ४) । तस्य पृष्ठस्यायं स्तोत्रियस्तृचः । ननु स्तोत्रियं शस्त्रानुरूपं शंसन्तीति स्तोत्रियानुरूपयोः सर्वत्र साहचर्यम् । कथं तर्ह्यत्रानुरूपाभाव इति कथं ज्ञायते ऽत्रानुरूपाभाव इति । अनुक्तत्वादिति ब्रूमः । नैतद्युक्तम् । सवर्चमिदं सूक्तं तन्मध्ये प्रथमस्तृचः स्तोत्रियत्वेन विहितः साहचर्या-दपरो ऽप्यनुरूपत्वेनानुमीयतां को दोष इति चेत् । न हि वचन-मन्तरेण द्वितीयस्तृचो ऽनुरूपत्वेन भवितुमर्हति । अनुरूपाभावे ज्ञा-पकमप्यस्ति विरेवाक्रयते स्तोत्रिये निविदं परिधानीयाया इति (१८. २१. ३) । त्रिष्वेव स्थानेष्वाहाववचनात् ज्ञायते नात्र कश्चित्तृचो[4] ऽनुरूपत्वेन शस्यत इति चेच्छस्यते तर्ह्याहावेन[5] भाव्यम् । स तु नास्ति तस्मात्तदभाव एव[6] वैषम्यादपि द्वितीयस्तृचो ऽनुरूप-

१ C प्राप्त । २ C (in marg.) शंसनीयमन्ते कुर्वन् । ३ A एतदहरुनि C अहमन॰ । ४ C कायेत् । ५ A तर्ह्यमिहिवेन । ६ C om. एव ।

लेन न भवति। कथं वैषम्यम्। स्तोत्रियस्य प्रथमस्य तृचस्यान्त्यो ऽर्धर्चे उत्सृज्यते न द्वितीयस्य तृचस्य तस्मादपि द्वितीयस्तृचो नानुरूपत्वेन शस्तव्य इति। पञ्चविंशात्मस्वरूपसिद्ध्यर्थमेव तस्य शंसनं युज्यते। तस्मादत्रानुरूपाभाव इति मन्तव्यम्।

५. पञ्चविंशात्मके आत्मनि प्रथमायाः सकृद्ग्रहणे एता नवर्चः संख्येयाः।

६. स एष आत्मा पञ्चविंश इत्यग्रे (१८. १. ११) वक्ष्यते। तस्मिन्नात्मनि एता अष्टौ संख्येयाः।

७. पञ्चविंशात्मकमध्ये गण्यते।

८. पञ्चविंशात्मनि मध्ये गण्यन्ते।

९. प्रथमायाः सकृद्ग्रहणेनैतास्त्रयोविंशतिसंख्याका भवन्ति।

१०. संपद्यत इति शेषः।

११. तदिदास भुवनेषु ज्येष्ठमिति एवमादिकः पञ्चविंशत्यृक्संख्याकः पञ्चविंश आत्मसंज्ञको[१] भवति।

१२. तमात्मानं नदेन नदं व ओदतीनामित्येतया पादश उपसृष्टं संयुक्तं शंसति।

१३. पूर्वसूत्रे नदेनोपसृष्टं शंसतीत्युक्तम्। तत्र न ज्ञायते नदशब्देन किमुच्यत इति। प्रदर्शनार्थं प्रतीकग्रहणम्। नदशब्देनेयमृगुच्यत इत्यर्थः।

१४. तं नदेनोपसृष्टं शंसतीत्युक्तम्। उपसर्गस्तूभयथापि भव-

१ A om. आत्म।

तीति वैष्टुभानां पादानां पूर्वप्रयोगनियमार्थं वचनम्। तस्यैव प्रयोगप्रकारं विवरीतुमाह।

१५. तदिदास भुवनेषु ज्येष्ठं नदं व ओदतीनाम्।

१६. यतो जज्ञ उग्रस्त्वेषनृम्णो नदं योयुवतीनां इति।

१७. सद्यो जज्ञानो नि रिणाति शत्रून्पतिं वो अघ्न्यानामिति।

१८. अनु यं विश्वे मदन्त्यूमा धेनूनामिषुध्यसोमिति।

१९. एवं नदेन विहृतामित्यर्थः।

२०. प्रथमा अतिरिक्ता। उत्तरा द्वाविंशतिभ्यो[1] नदेन विहृता[2] अनाहृताः शंसति।

२१. एवं नदेन विहृता तदिदासीयसूक्तस्य[3] या तृतीया ऋक् तस्या उत्तरमर्धर्चमुत्सृजति मद्ध्योत्तरम्। एवं द्वावर्धर्चावुत्सृजति। स्वादोः स्वादीयः स्वादुना सृजा सं पतिं वो अघ्न्यानाम्। अदः सु मधु मधुनाभि योधीः धेनूनामिषुध्यसो इति।

२२. तौ इत उद्धृतावर्धर्चौ द्विपदानामिमा नु कमित्याद्यानां पुरस्ताच्छंसेत्।

२३. पूर्वोक्तं पञ्चविंशत्युत्तमाम्नानं शस्त्वा तदनन्तरं सूददोहसं शंसेत्। सूददोहःशब्देन[4] किमुच्यत इति मदर्शनार्थं प्रतीकपञ्चपं ता अस्य सूददोहस इति। अर्धर्चशःशंसनं प्राप्तमेवानूद्यते।

---

1. A °तिभ्यः° C °तिभ्यः°। 2. C om. नदेन विहृता च। 3. C om. तदिदासीय A in marg. 4. C °दोहस इति।

## २.

१. अथो यमेवैतमृङ्मयं यजुर्मयं साममयं पुरुषं संस्कुर्वन्तीति श्रुतौ पुरुषरूपेण संस्तवात्तस्य शीर्षसंबन्धीनि शीर्षण्यानि यानि वा अस्य शीर्ष्णः कपालानि भवन्तीत्यर्थवादात्त्रीण्येव तानि भवन्ति ।

२. इन्द्रमिद्गाथिन[1] इन्द्रो दधीच उद्वेदभि श्रुतामघमृदु त्यं जातवेदसमित्येतेषु[2] सामगाः स्तुवन्ति । अत एतान्येव शंसेत् । तत्रेन्द्रमिद्गाथिन इत्यत्र तृचे प्रथमातृतीयाचतुर्थीषु स्तुवते अतः ताः शंसेत् ।

३. छन्दोगव्याख्यानमेतत् ।

४. ते छन्दोगा यदि तथा कुर्वन्ति तदास्माभिः किं कर्तव्यमित्यत आह ।

५. नवर्चमिति शेषः ।

६. छन्दोगानां विकल्पोऽस्ति नवर्चं स्तोतव्यं तृचे वेति ।

७. छन्दोगैः प्रथमे तृचे स्तुते ऽस्माभिः किं कर्तव्यमित्याह ।

८. इन्द्रमिद्गाथिन इत्यादीनां पञ्चानां तृचानां[3] मध्ये ये द्वे तृचे इन्द्रेहि उदु त्यं जातवेदसमित्येतस्मात्सूक्तात्परे शंसेत् ।

९. महति शस्त्रे विंशतिसंख्यया प्राप्त एव शस्त्रधर्मः[4] सर्वत्रानूद्यते ।

---

१ A C (sec. h.) om. the vers इन्द्रेहि मत्स्य contained in the text of the Sûtra. C in marg. उत्तिष्ठन्नोजसा । २ C (in marg.) पञ्चानां तृचानां ।
३ A om. तृचानां । ४ C शस्त्रधर्मः ।

३.

१. पुरुषस्य ग्रीवारूपमित्यर्थः।

२. अस्य तृचस्य शाखान्तरीयत्वात्सकलपाठः।

३. तं दैवं तृचमित्यर्थः।

---

४.

१. अथैतामर्चां शंसति। सा वै त्रिष्टुप् भवतीति श्रुतेः।

२. प्रस्तधर्मः प्राप्त एवानूद्यते।

३. अस्तोभियत्वे ऽपि ककुप्कारप्रापणार्थं[१] वचनम्।

४. अचाप्यनतुरूपत्वात् ककुप्कारप्रापणार्थं[२] वचनम्।

५. प्राप्त एव प्रख्यस्यानुवादः।

६. अर्धर्चशंसनं प्राप्तमेवानूद्यते।

७. तद्दिमौ पक्षौ व्यतिषजत्यविवर्हायेति श्रुतेः।

८. अथैतं प्रहस्तकं शंसति। ता वै तिस्र ऋचो भवन्ति[३]। त्रीणि ह्या अस्य पाणेः पर्वाणि भवन्तीति श्रुतेः।

९. निगद्व्याख्यानम्।

---

१ A ins. त्व। २ A om. प्रापणार्थं। ३ C ins. इति।

## ५.

१. इयं द्वितीयाचा । अचाशब्देन[1] बाहुरुच्यते । यथा त इन्द्र स्थविरस्य बाहू इति बाह्वोरभिरूपेति श्रुतत्वात् ।

२. उक्तव्याख्यानम् ।

३. पूर्ववद्व्याख्यानम् ।

४. उक्तव्याख्यानम् ।

५. मन्त्रभेदाभावात् ।

६. उक्तव्याख्यानम् ।

७. पच्छ्यतिषञ्जनार्थम् ।

८. सुगतार्थम् ।

९. उक्तव्याख्यानम् ।

१०. अयमपि भाषानुवादः

११. सप्तकसंज्ञकं तृचमित्यर्थः ।

---

## ६.

१. वक्ष्यमाणानीत्यर्थः । चतुरुत्तराणि चतुर्विंशत्यक्षरादीनि चतुर्भिश्चतुर्भिरक्षरैरधिकानां सप्तानां छन्दसां सप्त तृचानि ।

२. गायत्र्युष्णिगनुष्टुब्बृहतीनामित्यर्थः ।

३. सुगतार्थम् ।

---

१ C बाचमशब्देन।

४. दाभ्यामवसायदाभ्यामवसायेकेन प्रणीतीति धर्मकम्।

५. पृथक्सूत्रकरणं प्रस्तभेदात्[1]।

६. गतार्थम्।

---

७.

१. गायत्रीदृहत्युष्णिहामित्यर्थः।

२. एतया ऋचा[2] अग्नीतिदचात्मके गायत्रीछन्दस्क ऋग्गणः मारभ्यते।

३. अग्नीतिमध्ये गण्यन्ते।

४. अग्नीतिमध्ये तृचा गण्यन्ते।

५. अग्नीतिमध्ये गण्यन्ते।

६. अग्नीतिमध्ये गण्यन्ते।

७. तानि समस्तानि परिगणितानि चत्वारिंशत्तृचानि भवन्ति।

८. पूर्वो भाग इत्यर्थः।

९. अपरो भाग इत्यर्थः।

१०. गायत्र्यग्नीतिमध्ये गण्यन्ते।

११. १२. १३. १४. १५. resp. अग्नीतिमध्ये गण्यन्ते।

१६. शीर्षण्यतृचमध्ये उत्तिष्ठचोजसेति तृचः श्रुतः। तस्मिन्यदा छन्दोगाः स्तुवन्ति तदाच तमुद्धरेत्।

---

१ C प्रस्तभेदात्। २ C गायत्या instead of ऋचा।

१७. यदि शीर्षण्यतृचमध्ये अशितिं स्तुवते तथाप्यशीतिमध्ये उद्धरेदेव ।

१८. अशीतिमध्ये गण्यन्ते ।

१९. तानि समस्तानि उत्तरभागसंबन्धीनि चत्वारिंशत्तृचानि भवन्ति ।

२०. गायत्र्यशीत्या उत्तरो भागः । इत्यनेन दक्षिणं पार्श्वं गायत्री सप्तमौष्णिही मध्यं बार्हतीत्यात्मनो ऽङ्गसंपादनं दृष्टम् । अतश्च कपक्षशब्दो भागवचन इति युक्तम् । पूर्वोत्तरभागकरणप्रयोजनं चिन्त्यम् ।

२१. आशावत्पलादन्तराशंसनम् ।

---

८.

१. बृहतीसंबन्धिनीमशीतिं प्रारभत इत्यर्थः ।

२. बृहतीसहस्रं संपद्यत इति वक्ष्यते । तत्रेमाः प्रत्यक्षबृहत्यो ऽन्याः संपादिताः ।

३. ता विंशतिः प्रत्यक्षबृहत्य इत्यत्र ( १८. १०. ४ ) वक्ष्यते । तत्रैतास्तिस्रो भवन्ति ।

४. विंशतिमध्ये गण्येते ।

५. विंशतिमध्ये गण्यन्ते ।

६. चत्वारिंशत्प्रगाथानां पुरतः परतश्च विंशतिर्विंशतिः प्रत्यक्षबृहत्यः शस्यन्ते । तत्र याः पुरतः शस्यन्ते ता एताः प्रत्यक्षबृहत्यः ।

७. शस्यन्त इति वाक्यशेषः।

८. ते चत्वारिंशत्प्रगाथा इत्यग्रे (१८. १०. १२) वक्ष्यते। तत्रैते चत्वारो भवन्ति।

९. रायस्काम इत्येतां द्विपदामुद्धृत्य मो षु त्वेत्यादिकाश्चत्वारः प्रगाथा भवन्ति।

१०. चत्वारिंशन्मध्ये भवन्ति।

११. [1]चत्वारिंशति प्रतिप्रतीकं द्वौद्वौ भवतः।

१२. चत्वारिंशन्मध्ये गण्यन्ते।

१३. चत्वारिंशत्प्रगाथेषु गण्येते।

१४. चत्वारिंशन्मध्ये गण्यन्ते।

१५. *प्रगाथा भवन्ति।*

१६. यः शक्र इत्यादीनां षण्णां प्रगाथानां मध्ये चयः प्रगाथाः शस्यन्ते चीन्परिशिनष्टि। उत्तरचत्वारिंशतः प्रारम्भणार्थम्।

१७. ये निविदः पूर्वतः मत्यचवस्वतीविंशतिद्वयमध्ये[2] शस्यन्ते न इमे चत्वारिंशत्प्रगाथाः।

---

९.

१. अथ चत्वारिंशत्प्रगाथानन्तरमित्यर्थः।

२. प्रत्यचट्चत्वो भवन्ति।

---

१ A ins. प्रगाथा। २ C ॰च्चस्वतीः।

३. मद्दे चन त्वामित्यादीनां विंशतिं शस्त्वानन्तरं सूददोहसं शंसति ।

४. निविद्धीयते यस्यां सा निविद्धानीया ।

५. तां निविद्धानीयां पच्छः शस्त्वा शोंसावो३ इत्याहूय निविदं दधाति ।

६. तां निविदं पच्छः पादेन व्यवरुह्य समयसूक्तां शस्त्वा इत्यर्थः ।

७. निवित्पदानां मध्ये यदुत्तममन्त्यं तेन प्रणवं कृत्वा सजातेभिर्वृत्रहा सेदु हव्यैरित्येतां निविदा सह निवित्संख्यां शंसतीत्यर्थः ।

८. तां सजातेभिरित्येतां त्रिष्टुभावन्तरेण त्रिष्टुब्भिर्विदौ[1] वैश्वामित्रावर्कवत्यावभिरूपे इति श्रुतेः ।

---

१०.

१. यथा निविदः पूर्वभागे गायत्र्यशीतिः सूददोहा विंशतिः शत्यचकृत्यः चत्वारिंशत्प्रगाथाः पुनर्विंशतिः शत्यचकृत्यः सूददोहा निविद्धानीया निविच्चेत्येवं क्रमः तथा निविदुत्तरभागेऽपि निवित्संधनीया[2] सूददोहाः पञ्चविंशतिः शत्यचकृत्यः चत्वारिंशत्प्रगाथाः पुनर्विंशतिः शत्यचकृत्यः सूददोहा औष्णिह्यशीतिरिति ।

२. मद्दे चन त्वामद्रिव इत्यादिपञ्चविंशतेर्याः पञ्च परिशिष्टाः[3] शंसति ।

---

१ A त्रिष्टुब्भिर्विद्दि । २ A (in marg.) सजातेभिरिति । ३ A in marg. या आ रथ इत्याद्याः ।

३. प्रत्यक्षरत्यो भवन्ति।

४. परिशिष्टाभिः पञ्चभिः सहेत्यर्थः।

५. उक्तार्थम्।

६. तेषां चीनादस्त इत्युक्तम्। तान् प्रथमतः शंसति।

७. चत्वारिंशति प्रगाथा भवन्ति।

८. चत्वारिंशति भवति।

९. चत्वारिंशति भवन्ति।

१०. प्रगाथा भवन्ति।

११. चत्वारिंशत्प्रगाथेषु गच्छन्ते।

१२. सूक्तपक्षे ऽष्टाविंशतिः प्रगाथास्तन्मध्ये द्वावुद्धृत्य षड्विंशतिप्रगाथान् शंसति।

१३. पूर्वे चतुर्दश वालखिल्यानां षड्विंशतिरेवमेते चत्वारिंशत्प्रगाथा भवन्ति।

---

११०

१. सुगमम्।

२. प्रत्यक्षरत्यो भवन्ति।

३. अस्मिन् सूक्तद्वये दश प्रत्यक्षरत्यो भवन्ति।

४. ते सूक्ते अर्धर्चशस्ते श्रस्वाय नार्चत्यशीतिषमाप्यनन्तरं सूदोहसं शंसति।

---

## १२.

१. एतयोष्णिक्छन्दस्कामशीतिं प्रारभते।

२. तानि षट्त्रिंशत्तृचानीत्यग्रे (१८.१२.७) वक्ष्यते। तन्मध्ये एतान्येकादश भवन्ति।

३. एतस्मिन्सूक्ते षट्त्रिंशत्तृचमध्ये दश तृचानि भवन्ति।

४. षट्त्रिंशन्मध्ये भवन्ति।

५. षट्त्रिंशन्मध्ये भवन्ति।

६. षट्त्रिंशन्मध्ये भवतः।

७. तानि समस्तानि षट्त्रिंशत्तृचानि भवन्तीत्यर्थः। एताः षट्त्रिंशत्यत्वौष्णिहस्तृचाः (!)।

---

## १३.

१. औष्णिहाशीतिसंपादनार्थम्।

२. चतुःशतमध्ये गण्यन्ते।

३. चतुःशतमध्ये गण्यन्ते।

४. चतुःशतमध्ये सूक्ते भवतः।

५. चतुःशतमध्ये सूक्ते भवतः।

६. चतुःशतमध्ये सूक्ते भवतः।

७. चतुःशतमध्ये भवन्ति।

८. औष्णिहाशीतिमध्ये शंसतीत्यर्थः ।

९. औष्णिहाशीतिमध्ये शस्यन्ते ।

१०. द्वादशौष्णिहाशीतिमध्ये भवन्ति ।

११. शस्त्रधर्मः प्राप्त एवानूद्यते ऽसंदेहार्थम् । इन्द्राय साम गायतेति तद्यदेतदन्ततः शंसति संविद्धाभिरुष्णिग्भिर्वशं समारोहापीति श्रुतेः ।

---

## १४.

१. वशशब्देन वशर्षिसंबन्धि सूक्तं लक्ष्यते । अर्धर्चशस्त्रमौत्सर्गिकम् ।

२. वशशब्देन किमुच्यत इति संदेहव्युदासार्थं प्रतीकग्रहणं त्वावतः पुरूवसो इति ।

३. विशेषस्त्वर्धर्चशस्त्रमपवदति । तस्य वशस्य सप्तदशी ऋक् जगतीछन्दस्का । तां पच्छः शंसति ।

४. द्वाभ्यामवसायद्वाभ्यामवसायैकेन प्रणौति पङ्क्तीनामिति (७. २६. २) पङ्क्तिशंसनधर्म उक्तस्तद्धर्मकाः शंसन्तीत्यर्थः ।

५. द्वाभ्यामवसायद्वाभ्यामवसायैकेन प्रणौति पङ्क्तीनामित्युक्तम् । तदिह न भवति वचनात् ।

६. अस्मिन्सूक्ते छन्दोनेकत्वात्प्राप्तो ऽपि शस्त्रधर्मो ऽनूद्यते ।

७. तां पुरस्ताद्द्विपदानां शंसतीत्युक्तम् (१८. १. २२)। अतो ऽत्र शंसनं वचनात् ।

८. अर्धर्चद्वयं मिलितं स्तोत्रविशिष्टेन तच्छब्देन परामृश्यते। या

स्वादोः स्वादीयः स्वादुना सृजा सं पतिं वो अघ्न्यानाम् ।
अदः सु मधु मधुनाभि योधीर्धनूनामिषुध्यसो ॥

इतीयमृक्[1] । तत्र आत्मन एवोत्सृज्यते । अतो [illegible] शस्तव्या एवेत्येतदर्थं वचनम् ।

९. सूददोहसः परिगणनमिदम् । आत्मनो ऽसंभवात् । ता अत्र सूददोहस इत्येषा अत्र द्विपदानां शाकुशंसने चतुर्विंशतिकृत्वः शस्ता भवति ।

---

## २५.

१. अथेति वषट्शंसनानन्तरम् ।

२. ता एकविंशतिर्द्विपदा इत्यये (१८. २५. ७) वक्ष्यते । तत्रैताः पञ्च गण्यन्ते ।

३ ४. ५. resp. एकविंशतिमध्ये गण्यन्ते ।

६. आ धूर्ष्वस्मै दधाताश्वान् । वज्रमेको बिभर्ति हस्त आहितम् । अया वाजं देवहितं सनेमेत्येतास्तिस्र एकविंशतिमध्ये गण्यन्ते ।

७. ता एता एकविंशतिर्द्विपदा भवन्ति। ताः पञ्चः शस्यन्ते।

---

(१) १०. १२०. ३ । ८. ६८ १।

८. अर्धर्चद्वयं मिलितं श्लोकविशिष्टेन तच्छब्देन परामृश्यते। सा

स्वादोः स्वादीयः स्वादुना सृजा सं पतिं वो अघ्न्यानाम्।

अदः सु मधु मधुनाभि योधीर्धनूनामिपुध्यसो ॥

तृतीयमृक्[1]। तत आत्मन एवोत्सृज्यते। अतो ऽत्र शस्तव्या एवेत्येतदर्थं वचनम्।

९. सूददोहसः परिगणनमिदम्। आत्मनो ऽसंभवात्। ता अत्र सूददोहस इत्येषा अत्र त्रिपदानां आक्शंसने चतुर्विंशतिकृत्वः शस्ता भवति।

---

## १५.

१. अथेति वशशंसनानन्तरम्।

२. ता एकविंशतिर्द्विपदा इत्यये (१८. १५. ७) वक्ष्यते। तत्रैताः पञ्च गण्यन्ते।

३ ४. ५. resp. एकविंशतिमध्ये गण्यन्ते।

६. आ धूर्ष्वस्मै दधाताश्वान्। वज्रमेको बिभर्ति हस्त आहितम्। अथा वाजं देवहितं सनेमेत्येतास्तिस्र एकविंशतिमध्ये गण्यन्ते।

७. ता एता एकविंशतिर्द्विपदा भवन्ति। ताः पच्छः शस्यन्ते।

---

(१) १०. १२०. ३। ८. ६९. ६।

## १६.

१. गायत्रीं प्रैषमिति द्वाभ्यामवसायैकेन प्रणौति द्वाभ्यामवसायैकेनाग्राचरस्तु प्रणवनीयः ( ७. २६. १० ) इत्येतद्धर्मयुक्तम् ।

२. एकेनावसाय सप्तपदानां द्वाभ्यां प्रणौति द्वाभ्यामवसाय (७. २६. ११ ) द्वाभ्यामित्येतद्धर्मध्याहत्यर्थमिदं सूत्रम् । प्रैषं गायत्रीमुत्तरामिति उत्तरा गायत्रीवच्छस्तव्येत्यर्थः । द्वाभ्यामवसायैकेन प्रणौति ।

३. विस्पष्टार्थे वचनम् ।

## १७.

१. स्रावपलमिति छन्दसामन्वर्थसंज्ञा । कियन्ति च्छन्दांस्यपोयन्ते । जागतपाङ्क्तवैराजानुष्टुभानि । एकाधिकसूक्तचानि प्रैषतीत्यर्थः । चतुरक्षरवृद्धेषु च्छन्दसामानुलोम्येन द्वचानि प्रयन्ते । अत्र तु तद्वैपरीत्यम् । अथो एतान्येव पुनरयातयामानि भवन्तीति श्रुतौ दृष्टत्वात् ।

२. जगतीच्छन्दस्का ।

३. जगतीच्छन्दस्काः पञ्चैका त्रिष्टुप्[1] ।

४. प्राप्त एव प्रग्रधर्मो ऽनूद्यते विस्पष्टार्थम् ।

५. द्वाभ्यामवसाय द्वाभ्यामवसायैकेन प्रणौति पङ्क्तीनामित्येतद्धर्मकम् ।

1 C om. the last three words.

६ अत्रापि प्राप्त एव धर्मो ऽनूद्यते ।

७. एतानि चत्वारि छन्दांस्यावपनसंज्ञकान्यवरोहेण शस्तव्यानि।

---

## १८.

१. आनुष्टुभमिति समूहार्थे भिक्षादित्वादण् (पा० ४. २. ३७. ३८)। अनुष्टुप्समुदायं शंसतीत्यर्थः। समाम्नायं समाम्नायक्रमविशिष्टम्। गायन्ति त्वेत्यारभ्य याव इत्येत्येतत्पर्यन्तं समाम्नायक्रमेणानुष्टुप्समुदायं शंसतीत्यर्थः। गायन्ति त्वेत्यस्य प्रथमस्तृचस्तुरुत्तरत्र्यचेषु शस्तत्वात्परित्यक्तः।

२. आनुष्टुभे गच्छन्ते।

३. अनुष्टुप्समुदाये गच्छन्ते।

४. गच्छन्ते[१]। अस्मिन् सूक्ते षडेवानुष्टुभः॥ मत्स्यपायि ते मह इत्येकपातिनीषु दशसु बृहतीषु शस्तत्वादुत्सृष्टा। उभयोः सूक्तयोरन्त्या त्रिष्टुबुत्सृष्टा।

५. गच्छन्ते।

६. अन्त्या पङ्क्तिरुत्सृष्टा।

७. गच्छेते।

८. अन्त्या पङ्क्तिरुत्सृष्टा।

९. अस्मिन्सूक्ते षडेवानुष्टुभः।

---

१ ■ om. the first six words.

१०. अन्त्यतृचो गायत्रः परित्यक्तः।

११. स प्रत्नथा कविवृध इति द्व्यचमर्कवत्तेन समृद्धं गायत्र्युत्तमा तथा समृद्धमिति श्रुतेः।

१२. गणोते।

१३. नव गणान्ते।

१४. पञ्च गणान्ते।

१५. तत्सर्वमानुष्टुभमनुष्टुप्समुदायो ऽर्धर्चशः शस्यते।

---

## १६.

१. अथानन्तरमेतत् वक्ष्यमाणं त्रिष्टुभां शतं शंसेत्।

२. इन्द्रस्य नु वीर्याणि प्र वोचमित्येतत्पञ्चदशर्चं त्रिष्टुप्सूक्ते प्रथमं शस्यते।

३. या त ऊतिरवमा या परमेत्येतन्नवर्चं शंसति।

४. यो जात एव प्रथमो मनस्वानित्येतत्पञ्चदशर्चम्। चकारः सर्वत्र समुच्चये।

५. द्वादशर्चं चैतत्।

६. अष्टर्चपञ्चर्चं विश्वामित्रस्य शंसेद्विश्वामित्रो ह्येनदपश्यदिति श्रुतेः।

७. विश्वामित्रस्य शंसेदित्युक्तम्।

८. एकविंशर्चं वामदेवस्य शंसेदामं ह्येतद्देवानामिति श्रुतेः।

९. षळर्चं वसिष्ठस्य शंसेदाग्निष्ठं ह्येतद्देवानामिति श्रुतेः। एवमेतत्परिधानीयावकल्पने त्रिष्टुभां व्रतम्।

१०. तत्र त्रिष्टुप्प्रगते वासिष्ठसूक्तद्वये[1] उदु ब्रह्माण्यैरत श्रवस्येत्येतस्य सूक्तस्य पुरस्तात्पदानुषङ्गान्वच्यमाणान्कल्पयति। तदर्थं यो व्रतौं रफाणयदित्येतस्मिंस्तृचे प्रथमाया अर्धर्चे शस्त्वा उपरमति। यूयं पात स्वस्तिभिः सदा नो३यो व्रतौं रफाणयत्सुयुक्तौ उप दाशुषे इति।

---

## २०.

१. तक्वो नेता तदिद्वपुरतौदु ग्रक्क ओषतो इति।

२. यथा उपमा यो अमुच्यतेन्द्रो विश्वा अति द्विष इति।

३. यथा भिनत्कनीन ओदनमर्भको न कुमारको इति।

४. यथा पच्यमानं परो गिराधि तिष्ठत्वं रथमिति।

५. यथा स पचन्महिषं मृगं पित्रे मात्रे विभुक्रतो[2]। उदु ब्रह्माण्यैरत श्रवस्या इति।

६. ओ३मावो३ एवेदिन्द्रं वृषणमिति।

७. त्रिष्टुप्प्रगते सकृद्भणितत्वात्संदेहव्युदासार्थं प्राप्तार्थानुवादः।

८. नितरां परिधानीयां शस्त्वा सद्यस्त्वमीत्यादि जपित्वा मन्दमौत्यादि जपति।

---

१ C ins. वा। २ ऋग्वेद ८. ६९. ११-१२

## २१.

१. चतुर्विंशतिकल्पः शस्त्रापि सूददोहास्ता अस्य सूददोहस इत्येषा सकृदेव गम्यते। यावच्छस्त्रं शस्ते यावत्य ऋचः शस्यन्ते तावतीनां सहस्रं बृहत्यः संपद्यन्त इत्यन्वयः। तं मदेशोपस्तृतं शंसनीत्युक्तम्। अतो मदं व ओदतीनामित्येषा ऋगुपसर्जनी। सा [1]पञ्चविंशतिकल्पः शस्त्रापि बृहतीसंपत्त्यर्थं गम्यत एव। ऋते तूष्णींशंसमिति ब्रह्म जज्ञानमित्येतास्तिस्र ऋचो बृहतीसंपत्तये[2] न गम्यन्ते।

२. स्तोत्रियायाऽऽहावो ऽनुरूपाय धाय्यायै प्रगाथाय सूक्ताय निविदे परिधानीयायै चेत्यनेन सप्तसु स्थानेषु मास आहावस्त्विव नियम्यते।

३. स्थाननियमार्थं सूत्रम्।

४. पिबा सोममिन्द्र मन्दतु त्वेति।

५. होता याज्याया वषट्कारे सजपेन कृते प्राक् अनुवषट्कारात्। प्रासर्पकाः प्रेङ्खं यच्छन्ति ईषद्विसृजन्ति।

६ आगच्छन्तमध्वर्युं [समाहृतमपरस्तं स्पाला प्रेङ्खात्प्राङ्][3] प्रेङ्खसंनिधावेवारोहति[4]। न तु धिष्ण्योपरि।

७. धिष्ण्यस्य पश्चात्सुखासनार्थम्।

८. प्रेङ्खं प्रतिगृह्णन् यमिमं भजयमिति मन्त्रं जपति।

१ A ins. आत्मनि प्रत्यञ्चमुपस्पृश्य चो। २ A संपत्त्ये C संपत्तेये। ३ C om. the words enclosed in brackets. ४ A व्यवरोहति।

९. प्रकृत्यनुवादः क्रमार्थः।

१०. अस्मिन्नहनि भवतीत्यर्थः।

११. तस्यातिग्राह्यस्य उप मा यन्तु मज्जय इत्येवमादिना मन्त्रेण भक्षः कार्यः।

१२. क्रमार्थो ऽनुवादः।

१३. प्रकृत्यनुवादसहितविशेषेण सम्यक् प्रोक्तमिति।

---

## २२.

१. अथ माध्यन्दिनसवनक्लृप्तेरनन्तरम्। अतो हेतोर्यतो माध्यन्दिनं सवनं क्लृप्तमित्यर्थः। अतस्तृतीयसवनं कल्प्यते।

२. प्रकृत्यनुवादो विस्पष्टार्थः।

३. एष प्रतिपदनुचरलक्षणो विधिर्नित्य[१] एकाहात्प्रकृतिभूता-दग्निष्टोमात्तायते[२]। अत्रापि क्रियते।

४. सुगमार्थम्।

५. इदमपि तथा।

६. इदमपि तथा।

७. एतस्मिन्सूक्ते एतावान्विशेषः। ऋग्द्वयमर्धर्चशः शस्यं छन्दोविशेषत्वात्। इतरासां पच्छो ऽविशेषात्[३]।

---

१ A नित्य एव यत एकाहात्म। २ A om. तायते। ३ A ऽविशेषात्। A adds the following passage इदं च सूक्तं वसिष्ठसंबन्धि गौरिविताय वसिष्ठायेति तत्संबन्धाभिधानात् वसिष्ठस्यायतनत्वात् तत्रास्य तथा च श्रुतिः वसिष्ठ एतद्देवानामिति।

८. ऐकाह्निके निविदं दधातीति श्रुतेः ।

९. यद्यपि पञ्चजनीया परिधानीया सर्वत्र वैश्वदेवस्येत्युक्तं तथापि विस्पष्टार्थमनूद्यते ।

१०. इतिशब्देन तत्सवितुर्वृणीमह इत्यादि सर्वं परामृश्यते। एवंविधमत्र वैश्वदेवशस्त्रं भवति ।

---

## २३.

१. अथानन्तरमाग्निमारुतं शस्त्रं वक्ष्यत इति शेषः ।

२. सुगमार्थमेतत् ।

३. इदमपि विस्पष्टार्थम् ।

४. ते सामगा यदि यज्ञायज्ञीयमग्निष्टोमसाम कुर्वन्ति ।

५. यज्ञा यज्ञा वो अग्नये देवो वो द्रविणोदा इति स्तोत्रियानुरूपौ प्रगाथौ यज्ञायज्ञीयस्येत्युक्तम् ( ८. ६. ५ )।

६. प्रगाथानां ककुप्कारग्रंथनमुक्त्वा सर्वत्र यज्ञायज्ञीयस्येत्युक्तम् ।

७. [1]यदि सामगा इडांदसंज्ञकमग्निष्टोमसाम कुर्युरिति शेषः। तथा सति किं स्यादित्याह ।

८. संज्ञप्तौ स्तोत्रियानुरूपावित्यर्थः ।

९. छन्दोगापेक्षया विकल्पः ।

१०. [ अग्ने तवेत्यादीनां द्वादशानामृचां ग्रंथनप्रकार इत्यर्थः।

---

१ C अग्निष्टोमसामे इडांदं साम कु० ।

इत्यादं सामाग्रे तवेति प्रथमे तृचे गेयमिति पचे उक्तौ स्तोत्रियानुरूपौ। यदि तव्रे तवेति तृचद्वये सुवीरंस्तदाग्रे तवेति षट् स्तोत्रिय अग्निनेति षडनुरूप इति ]¹ प्राप्तमेवैतदिस्पष्टार्थमनूद्यते।

११. छन्दोगा यदि अतिच्छन्दःसु अग्निष्टोमसाम कुर्वन्ति।

१२. एतावपि संलग्नावेव स्तोत्रियानुरूपौ। कियांस्तु विशेषस्तमाह।

१३. अतिष्टतिच्छन्दस्त्वात्षष्ठीमुद्धृत्य तत्स्थाने सप्तमीं कृत्वा एवंविधो ऽनुरूपः कार्यः।

१४. छन्दोगापेक्षया विकल्पः।

१५. विविधाक्षमारो ऽर्धर्चा भवन्ति यस्मिन् शंसने तदिषत्तरम्। एकेनावसाय सप्तपदानां द्वाभ्यां प्रणौति द्वाभ्यामवसाय द्वाभ्यामिति (७. २६. ११) प्रऊधर्मेण न पदं च पुनःपदं चान्तरेणावान्यादिति (कौ० ब्र० २३. ६) पदपुनःपदमध्ये ऽवसानरहितविशिष्टाक्षरारो ऽर्धर्चा भवन्ति यस्मिञ्छस्ते तदेवंविधं विषत्तरं शस्त्रम्। शंसनमतिच्छन्दसामग्निं होतारं मन्ये दास्वन्तमित्यादीनां स्तोत्रियानुरूपाणां भवतीति प्राप्तमेवानूद्यते। अपूर्वस्यार्थान्तरस्यासंभवात्।

१६. रथन्तरपृष्ठव्यतिरेकेण योन्यनुशंसनस्य निषेधो ऽस्ति। अतो ऽत्रापि योन्यनुशंसनं निषिध्यते। न ह्यन्येषां पृष्ठानां योनिः प्रस्ता भवतीति ह स्माह कौषीतकिरिति श्रुतेः।

---

१ The words enclosed in brac[kets are] omitted in C.

१७. सूक्तं भवतीत्यर्थः।

१८. वैश्वानराय पृथुपाजसे प्रयज्यवो मरुतो वसिष्ठेत्येतान्याग्निमारुतशस्त्रे निविद्धानानि सूक्तान्युक्तानि।

१९. इतिशब्देन मरुत्वतीयप्रभृतीन्येतस्याह्नः सर्वाणि सूक्तान्युक्तानीत्यर्थः।

२०. तदेतदहरग्निष्टोमसंस्थं भवतीत्यर्थः। छन्दोगब्राह्मणेऽप्युक्थ्यसंस्थं[1] भवतीत्यर्थः। अथ यथाभिजितं (१२. २७. ४) विषुवन्तं दृष्टपृष्ठं विश्वजितं महाव्रतीयमहरित्युक्थ्यानि कुर्युर्यान्तु विंशिकान्युक्थानीत्युक्तम्।

२१. अग्निष्टोमसंस्थमेतदहः परिसमाप्य प्राक् प्रातरनुवाककालादेतां[2] रात्रिं वसन्ति निर्व्यापारा यथासुखं स्वपन्ति सत्रिणः।

---

## २४.

१. सत्रिण इति शेषः।

२. यः प्रायणीयो निर्ज्ञातस्वरूपः। उदयनीयोऽपि स एव। विशेषस्तूच्यते।

३. तत्रोदयनीयातिरात्रे मैत्रावरुणः सर्वान्करश्चाम्संबाध्य वस्त्रादिना बद्धा प्रेषानाह। यद्यपि करश्चौ नाह कर्मणा प्रशातारा-

---

[1] C ins. अपि।  [2] C.॰ह्नादेः।

विति करस्नशब्दो बाहुवचनस्तथाप्यत्र *तदवयवभूतानां नखानां* वाचकः करस्नानिति बहुवचनानुपपत्तेः[१] । करे स्नान्ति स्नुह्मीति करस्नाः[२] नखा धातूनामनेकार्थत्वात् । बहुकरस्नसंप्रेषणप्रयोजनमदृष्टोत्पत्तिरेव ।

४. ते दीक्षिता गवामयनस्य प्रथमे मासे दीक्षितवसनानि *दीक्षाकाले यानि*[३] *धृतानि तान्येव वसते वसनार्थं धारयन्ति ।* वाशब्दो ऽत्रावधारणे ।

५. तानि प्रथममासधृतानि दीक्षितवसनानि नवरात्रार्थं कस्मिंश्चित्प्रदेशे स्थापयन्ति ।

६. *यानि दीक्षितवसनानि प्रथममासि धृतानि नवरात्रार्थं* निहितानि तान्युत्तममासे परिधानार्थं धारयन्ति । केचिदुत्तराय च मासायेत्येवं पठन्ति । तदयुक्तम् । उत्तरमासस्य नवरात्रान्तर्गतत्वाद्विषुवतः परेषु चतुर्थ्वहःसु पुनर्विधानं व्यर्थं स्यात् । तथा पूर्वोत्तरपटलयोर्दीक्षितवसनपरिधाने वैषम्यं स्यात् । यथा[४] प्रथमपटले प्रथममासे दीक्षितवसनानि धृतानि पुनश्च विषुवतः पूर्वेषु चतुर्थ्वहःसु नवरात्रैकदेशभूतेषु एवमेवोत्तरपटले ऽपि विषुवतः परेषु चतुर्थ्वहःसु दीक्षितवसनानि धृत्वा उत्तममासे द्वाविंशद्दरात्मके धारयितव्यानि । उत्तराय च मासायेत्येतस्मिन्पाठे एवं न स्यात् । अतश्च वैषम्यम् । तस्मादुत्तमाय च मासायेत्ययमेव पाठः साधीयान् ।

---

१ A ॰पत्ते: । २ C ins. च । ३ C om. वे and यानि ।
४ C ins. हि ।

७. अथेतराग्र्यमोत्तममासनवराचवर्जितान् दश मासान् अजिनानि पाविश्यात्[1] कृष्णाजिनानि दीचाप्रतव्यतिरिक्तानि परिधानयोग्यानि कृत्वा वा वसते परिधत्ते। अथवा आर्द्राण्युदकक्लिन्नानि वसनानि वसते परिधत्ते। एवं मासविशेषे वसनविधौ[2] दृष्टप्रयोजनाभावाददृष्टं कल्पनीयम्।

८. तस्मिन्नुदयनीयातिराचे संस्थितकर्माणि समाप्तिसंबन्धीनि कर्माणि क्रियन्तेऽध्वर्य्वादिभिः।

९. अवभृथे व्युत्क्रामतापन्वहं वसतीवरीग्रहणं चेत्युक्तं (१३. ४. २७. २८) कातीयसूत्रे। तदेतस्मिन्न भवति।

१०. इह मद[3] एव मघवन्नित्यतिप्रैषमाह द्वितीयप्रभृतिष्विति (१०. १. ११) यदुक्तं तदिह न भवति।

११. सत्त्रिण इति शेषः। सर्वेषां यागाधिकाराद्बहुवचनम्।

१२. सत्त्रिणसमसाध्वर्यवश्च।

१३. सत्त्रिभिरिति शेषः।

१४. ते दीक्षिता यदि यज्ञागारेषु समस्तामतं सत्त्रान्तरं प्रारब्धुकामा भवेयुस्तथा सति प्रेङ्खमिश्रमादधत एव। डुधाञ् धारणपोषणयोरिति धारणार्थो दधातिरिह ज्ञातव्यः।

१५. यदि सत्त्रान्तरमारप्समाना न[4] भवेयुस्तथा सत्यादीप्य[5] प्रविशन्तीत्युक्तत्वात्सर्वान्यज्ञागारानग्निसात्कुर्वते। तथा सति प्रेङ्खफलकमपि तत्रैव प्रवेशव्यमित्यर्थः।

---

१ A पाविश्यात्। २ C वसनविशेषविधौ। ३ O इदमद।
४ C om. न। ५ A चादिद्वं।

१६. अवभृथमवैतीत्यत्र निर्ज्ञातपदार्थस्वरूपः।

१७. प्रायणीययोदयनीया व्याख्यातेत्यत्र।

१८. मैत्रावरुणी वशानूबन्ध्या पयस्या वेत्यत्र।

१९. व्यत्ययो मङ्गलमिति तस्या इति षष्ठ्यर्थे चतुर्थी। अनूबन्ध्याया वपाकर्मणि समाप्ते[1]। वेदेरर्धद्वयमस्ति उत्तरार्धं दक्षिणार्धं च दक्षिणार्धं ऽप्यर्धद्वयम्। पूर्वार्धमपरार्धं च। तस्माद्दक्षिणापरार्धाद्बहिः[2] पश्चाद्भागे पटकुटीं[3] कृत्वा सर्वे दीक्षिताः केशश्मश्रुवपनं कुर्वते।

२०. वैधवपनं कक्षोपस्थवर्जमिति निषेधो ऽस्ति। तद्बोधनार्थं सर्वाणीत्युक्तम्।

२१. स्मृतिप्राप्तमपि विशिष्टस्नानार्थमनूद्यते। विशेषश्च बहुकालमस्नातत्वात्सर्वमलापकर्षः।

२२. चन्दनकेसरसुगन्धितिलकमाल्यसुवर्णवस्त्रसुवर्णाभरणादिभिः स्वशरीराणि सुभूषितानि कुर्युः। स्नानमलंकरणं च पत्नीनामपि समानं मलिनताविशेषात्।

२३. स्वलंकृता दीक्षिता उष्णीषान् शिरोवेष्टनानि पर्यस्यन्ति बध्नन्ति। आ केशानां संजननात्। केशोत्पत्तिं मर्यादीकृत्य।

२४. परिशेषं वपायागोत्तरानुष्ठेयं कर्मशेषम्। अनूबन्ध्यायै अनूबन्ध्यायाः संस्थापयन्ति समापयन्ति।

२५. उदयनीयान्ता अनूबन्ध्या संतिष्ठते समाप्यते।

---

१ A समाप्तो C समाप्तौ। २ A वेदे instead of बहिः। ३ A पटंकुटीं।

२६. तस्यामनूबन्ध्यायां संस्थितायां समाप्तायां गृहपत्यरण्योः यथासंप्रकीर्णमेकीकृतानामग्नीनां समारोपं कृत्वा ततः।

२७. गृहपतिप्रभृतयशालाचोत्करावन्तरेण उपनिष्क्रमणं कुर्वन्ति।

२८. यात्रिकदेवयजनप्रदेशादुत्तरत उत्तरस्मिन्प्रदेशे उद्धतावोक्षिते समदृश आन्यायतनानि अग्निस्थानानि कृत्वा ततः।

२९. तानि गोमयोपलिप्तानि कृत्वा।

३०. तत उदवसानीयेष्टिमुपक्रम्य गृहपत्यरण्योः सर्वेषां मन्थनं कृत्वा गृहपतिब्रह्मादयः स्वान् स्वानग्नीन्संस्थापयन्ति।

३१. प्रणीताप्रणयनं कृत्वा गृह्येतिकर्तव्यतया इदं विष्णुरित्यनेन सर्वे पूर्णाहुतीर्जुह्वति।

३२. नाना उदवसानीयाभिरिष्टिभिर्यजेरन्। य आहिताग्नयो भवन्तीत्यनेन अनाहिताग्नीनामपि सत्त्रासनं दर्शयति।

३३. ये अनाहिताग्नयः सत्त्रिणस्ते गृहपतिमेव उदवसानीययेष्टा[1] उपासीरन्। उदवसानीयाकाले गृहपतिसमीपे उपविशन्तीत्यर्थः। गृहपतिमेवेत्येवकारकरणं नेदिष्ठिप्रतिषेधार्थम्। मुख्यं गृहपतिमेव न नेदिष्ठिनमिति। अथवा तद्देवतैः स्थालीपाकैर्यजेरन्ननाहिताग्नय इति छान्दोग्यभाष्ये।

३४. उत्थाय चाग्निष्टोमः सहस्रदक्षिणः पृष्ठशमनीय[2] इति (१३. १४. ७) य उक्तस्तस्य इदानीमनुष्ठानं भवति।

---

१ A ॰ष्ट्या। २ Mss. ष्ठ्य।

२५. विकल्पेन न भवतीत्यर्थः ।

२६. यस्मिन्पक्षे यजेत तस्मिन्पक्षे एते एव सत्रिण ऋत्विजो भवन्ति । स काममेवेत्याद्येकवचननिर्वादेन[1] गृहपतेरेव पृष्ठशमनीयो[2] भवतीत्यवसीयते । अस्य गृहपतेः पृष्ठशमनीययागे एते एव सत्रिण ऋत्विजः स्युरित्यर्थः । सत्रिणः सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्निति । शाखान्तरश्रुतेस्तु एकैको यजमान अन्यान्यान्षोडशषोडश ऋत्विजो वृत्वा पृथक् पृथक् पृष्ठशमनीयं करोतीत्यपि च ।

२७. तेभ्यः सत्रऋत्विग्भ्यः तद्द्वादशेयं स्यात् पृष्ठशमनीये । सहस्रं गावो विभज्य देया इत्यर्थः ।

२८. अत्र उदयनीयातिरात्रसमाप्तौ[3] संवत्सरसत्रं समाप्तं भवतीत्यर्थः ।

२९. अथशब्दो मङ्गलार्थः । अतः होत्रनुष्ठानविचारानन्तरं होत्राणामेव मीमांसा होत्रकाणामेव विचारो ऽभिप्रेतः । तस्मातः । तस्य होत्रकानुष्ठानस्य अत एव उक्तादेव शास्त्रान्निर्वाह इत्यर्थः । यथा । ऐकाहिकं वा (११. १०. ६) प्रातःसवनमित्यत्र वाशब्दस्यावधारणार्थत्वात् प्रातःसवने होत्रकाणामैकाहिकान्येव शस्त्राणि । चतुर्विंशे ऽभिजिति विषुवति बृहत्पृष्ठे विश्वजिति महाव्रते च षष्ठादिति (१२. ६. ७) माध्यन्दिने सवने[4] पार्ष्ठिकात्षष्ठादेव ।

---

१ A ०देव C ०देन । २ Mss. श्न throughout. ३ C ०रात्रि० ।
४ C उत्तरयोः सवनयोः instead of माध्यन्दिने सवने ।

अथ यद्यभिजितं विषुवन्तं बृहत्पृष्ठं विश्वजितं महाव्रतीयमहरित्युक्थ्यानि (१२. २०. ४) कुर्युश्चातुर्विंशिकान्युक्थानीत्युक्थ्यसंस्थे चातुर्विंशिकानीत्यादि ।

द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारसदाचरणं चायुष्यमिति ।

## इति महाव्रतभाष्ये द्वितीयो ऽध्यायः[१] समाप्तः ।

---

१ A °व्रतसूत्रव्याख्यायामष्टा° C इति शाङ्खायनसूत्रभाष्ये ऽष्टादशो ऽध्यायः ।